आर्हतमतप्रभाकरस्य

( द्वितीयो मयूख )

श्रीमदुमास्वातिवाचकवर्यप्रणीतानि

# सभाष्यतत्त्वार्थाधिगमसूत्राणि

पुण्यपत्तनस्थ

ओसवालवंशजश्रेष्ठिलाधाजीतनूजमोतीलाल इत्येतै

टिप्पणीभिरुपोद्घातेन च परिष्कृत्य संशोधितानि ।

वीरसंवत् २४५३

प्रथमेयमङ्कनावृत्ति

इद पुस्तक ' मोतीलाल लाधाजी ' इत्येत पुण्यपत्तने
( १९६ भवानी पेठ ) प्रकाशितम् ।
( अस्य सर्वेऽधिकारा प्रकाशकेन स्वायत्तीकृता )
तच्च,
पुण्यपत्तने शनिवारश्रेण्या ' गणेश काशीनाथ गोखले ' इत्यनेन ' गणेश
प्रिंटिंग वर्क्स ' मुद्रणालये ( अध्यायदशकात्मको प्रथमभाग )
सदाशिवश्रेण्या ' लक्ष्मण भाऊराव कोकाटे ' इत्यनेन ।
' हनुमान प्रिंटिंग प्रेस ' मुद्रणालये (अवशिष्टभाग )
च मुद्रितम् ।



(कच्छ) देशोद्धारक दादा श्री जीतविजयजी महाराजना प्रशिष्य
प्रात स्मरणीय शान्तमूर्ति परमपूज्य आचार्यदेव
श्री विजयकनकसूरीश्वरजी महाराज

श्री

वीरः सर्वसुरासुरेन्द्रमहितो वीरं बुधाः संश्रिताः
वीरेणाभिहतः स्वकर्मनिचयो वीराय नित्यं नमः ।
वीरात्तीर्थमिदं प्रवृत्तमतुलं वीरस्य घोरं तपो
वीरे श्रीधृतिकीर्तिकान्तिनिचयः श्रीवीर ! भद्रं दिश ॥ १ ॥

# प्रास्ताविकं किंचित् ।

## १ तत्त्वार्थाधिगमसूत्राणि ।

अयि श्रेष्ठा विद्वांसः । आर्हतमतप्रभाकरस्यास्याः परिचये प्रतिश्रुतानुसारं द्वितीयोऽयं किरणः 'तत्त्वार्थाधिगमसूत्राणि' इत्याख्यः प्रसाद्य श्रीमत्समक्षे प्रेष्यते । सूत्राणीमानि भगवानुमास्वातिवाचकमुख्यो दशभिरध्यायैः समापयामास । अयं सूत्रग्रन्थो यद्यपि श्वेताम्बराणां दिगम्बराणां चोभयेषामपि मान्यतमस्तथापि मतद्वये सूत्रसङ्ख्याभेदो दृश्यते । तथाहि श्वेताम्बरमते ३४४ सङ्ख्याकानि सूत्राणि । दिगम्बरमते तु ३५७ सङ्ख्याकानि । कानिचित्सूत्राणि मतद्वये समानाक्षराणि । कानिचित्सम्प्रदायानुरोधेनाक्षरविपरिवृत्तिसहितानि । कानिचित्तु सम्पूर्णतया नवीनानि । कानिचिदन्यतरमते परित्यक्तान्येव । अयं सूत्रभेदस्तृतीयपरिशिष्टे द्रष्टव्यः । अध्यायसाम्येऽपि दिगम्बरमते प्रत्यध्यायमाह्निकद्वयम् । श्वेताम्बरमते आह्निकानि न सन्ति । अधुना प्रत्यध्यायं विषया प्रोच्यन्ते । प्रथमेऽध्यायचतुष्के जीवतत्त्वस्य वर्णनम् । ततः पञ्चमेऽध्यायेऽजीव (पुद्गल) स्य वर्णनम् । षष्ठसप्तमयोराश्रवस्य वर्णनम् । अष्टमे बन्धस्य वर्णनम् । नवमे संवरनिर्जरयोर्वर्णनम् । दशमे मोक्षतत्त्वस्य वर्णनम् । 'स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ।' इति सर्वमान्यसूत्रलक्षणेन लक्षितानि भगवदुमास्वातिप्रणीतानीमानि सूत्राणि नाशतोऽपि पाणिन्यादिसूत्रापेक्षया न्यूनानि । अधीतेष्वेषु सूत्रेषु जैनमतं सविस्तरं यथायथमधिगतं भवेदिति पण्डिता निर्विशङ्कं वक्तुं प्रभवेयुः । यतो न कुत्राप्युपलभ्यमानग्रन्थेषु एतत्सूत्रवैमत्यमुपलभ्यते । किंतु सर्वैरपि तैर्मन्यरद्धिर्हरिभद्रसूरिवादिदेवसूरिहेमचन्द्रमल्लिषेणप्रभृतिभिः प्राचीनार्वाचीनैः पण्डितवरेण्यैः सूत्राणामेतेषां प्रामाण्यं तत्र तत्र विषयेषूररीकृतम् । अतः प्राचीनं सूत्रमयो जैनमतस्य प्रतिपादको

ग्रन्थो नाधुनोपलभ्यते तेनायमेवास्मिन् जैनमतप्रतिपादनविषये प्रामाणिकमर्धयतामादीकल इति निर्विवादम् । तस्यतस्येदृश माहात्म्यमालोच्यैव सुधिया प्राचीनाना प्रथितिर्यत् एषु सूत्रेषु सकृत् पठितेषु उपोषणस्य फल लभ्यत इति । किंच श्री उमास्वातिवाचकाचार्याणा तत्त्वप्रतिपादन शास्त्रीयत्वाच्छ्रद्धास्पद न केवल किंतु आधुनिकसशोधकवैज्ञानिकसमतमपि । यत श्री प्रफुल्लचन्द्रमहाभागस्तथा तद्वर्णन (History of Hindu Chemistry Vol 2 p 178) इत्यत्र कृतम् ।

तथाहि

' दशाध्यायपरिछिन्ने तत्त्वार्थे पठिते सति ।

फल स्यादुपवासस्य भाषित मुनिपुङ्गवै ॥ १ ॥ '

इमान्येव सूत्राणि दिगम्बरैर्मोक्षशास्त्रमित्यप्यभिधीयन्ते ।

अस्य सूत्रग्रन्थस्य बह्व्यो व्याख्या सम्प्रदायद्वयाचार्यप्रणीता सन्ति । तेषा नामानि सम्प्रदायभेदप्रदर्शनपूर्वकमभिधीयन्ते । तथाहि—

श्वेताम्बरसम्प्रदाये—

| ग्रन्थनामानि | कर्तृनामानि |
|---|---|
| १ गजगन्धहस्तिमहाभाष्यम् । | श्रीसिद्धसेनदिवाकरप्रणीतम् ( प सुखलालबेचरदासयोमतेन वि प्रथमशताब्दी ) ( प नाथूरामप्रेमिमतेन वि पञ्चमशताब्दी ) ( प सतीशचन्द्र इ स ४८० मध्ये जन्म ) |
| २ व्याख्या [ श्लो १८२८२ ] | श्रीसिद्धसेनगणिप्रणीता |
| ३ व्याख्या [ श्लो ११००० ] | श्रीहरिभद्रसूरिरचिता जैनसाहित्यसशोधकमतेन वि स ५८० तः सतीशचन्द्रमतेन वि स ५३५, विचारश्रेण्या धारस १०१ |
| ४ व्याख्या | श्रीयशोविजयजीविरचिता ( वि स १७ शताब्दी ) |
| ५ टिप्पणकम् | चिरन्तनमुनिरचित श्रीहेमचन्द्रादनन्तर यत -२१ टिप्पणके टिप्पनककारस्य उक्ति 'अत एव हेमचन्द्राचार्यपादाः — अपर्यय वस्तु समस्यमानमद्रव्यमेतच्च विविच्यमानम् । आदेशभेदोदितसप्तभङ्गमदीदृशस्त्व बुधरूपवेद्यम् ॥ इति स्याद्वा |

| | |
|---|---|
| ९ तत्त्वार्थवृत्ति | श्रीयोगदेव । |
| १० तत्त्वार्थटीका | श्रीलक्ष्मीदेव । |
| ११ तात्पर्यतत्त्वार्थटीका | श्रीअभयनन्दिसूरि ( तृतीय ) वि स ७७ |

एतद्व्यतिरिक्ता अन्या अपि बह्व्यो व्याख्या देशभाषामया विद्यन्ते। अनुपयोगान्नास्माभिस्ता सगृहीता ।

## तत्त्वार्थाधिगमसूत्रभाष्यम् ।

इद भाष्य स्वोपज्ञ स्वय सूत्रकृद्भिर्भगवदुमास्वातिवाचकमुख्यैरेव प्रणीतम् । अत्र श्वेताम्बराणा न विमति । यत सर्वैस्तत्सम्प्रदायस्थैर्व्याख्याकृद्भिरनेन भाष्येण सहैव सूत्राणा व्याख्यान कृतम् । किंच प्रथम सम्बन्धकारिकासु वक्ष्यामि (२२ का ) प्रवक्ष्यामि (का ३१) इत्युक्तम् । तच्च सूत्रकारिकाकर्त्रोरैक्य एव सभवति । तथैव वक्ष्याम ( ५-३७ ) इत्युक्त्वा सूत्राणि प्रणीतानि । तेनापि सूत्रभाष्यकर्त्रोरैक्यमेव ज्ञायते । यतो वक्ष्यामि ( स का २२) प्रवक्ष्यामि ( ३१ का ) वक्ष्याम ( ५-३७ ) इत्यादिषु उत्तमपुरुषप्रयोगेषु अस्मत्पदबोध्य एव कर्ता ग्राह्यो भवति । तेन सूत्रभाष्यकर्त्रोरैक्यमेवोररीकर्तव्यम् । दिगम्बरमतानुयायिव्याख्यातृभि सूत्रभाष्यकर्त्रोर्भेदमालम्ब्य नेद स्वोपज्ञमिति सधाय भाष्य न व्याख्यातम् । तत्र मूल न पश्याम । प्रत्युत यदि न स्याद्भाष्य स्वोपज्ञ तर्हि भाष्यसमाप्तौ ये श्लोका भगवतामुमास्वातिवाचकाना नामग्रामादिक बोधयन्ति । ते केवल भाष्यकृता नामादिबोधका भवेयु । सूत्रकृता नामग्रामादिक कस्मात् ज्ञायेत । अन्तिमश्लोका सूत्रकाराणा कृतिरित्यपि वक्तु न शक्यते । यत कुत्रापि सग्रन्थे शास्त्रीयसूत्रग्रन्थे वा सूत्रकृद्भि श्लोकाना नामग्रामादिबोधकाना प्रणयन कृत न दृश्यते । अत सर्वसमत पद्धतिमादृत्यैवमेव वक्तव्य यच्छ्लोका ग्रन्थान्तस्था भाष्यकारप्रणीता एव । सूत्रकृतो भगवदुमास्वातिवाचकमुख्या इत्यत्र सूत्रनिर्देशपुरस्सर श्रीहरिभद्रसूरिवादिदेवसूरिहेमचन्द्राचार्यादीना सम्मतिर्दर्शिता । भाष्यकृतोऽपि वाचकमुख्या इत्यत्र स्याद्वादमञ्जरीप्रणेतॄणा श्रीमल्लिषेणसूरीणा संमति । तथाहि—न भवति० २९ इय सम्बन्धकारिका भाष्यगता ३ श्लोकव्याख्यायाम् । श्लो २८ व्याख्याया भाष्य गृहीतम् ।

एव च सिद्ध निर्विवाद यदेतद्भाष्य सम्बन्धकारिकान्तिमश्लोकसहित सूत्रकारप्रणीतम् । एते सूत्रभाष्यकृत श्रीभगवदुमास्वातिवाचकमुख्या । एतेषा जन्मस्थान न्यग्रोधिकाग्राम । एतेषा माता वत्सगोत्रजा उमा

पिता च कौभीषणिगोत्रज स्वातिसञ्ज्ञक । एतेषा शाखा नागरसञ्ज्ञिका। एते वाचकमुख्यस्य शिवश्रिय प्रशिष्या । घोषनन्दिश्रमणस्य शिष्या । वाचनया तु मुण्डपादस्य प्रशिष्या । एतेषामवतारकालो दिगम्बरमतेन वत्समप्रथमशतकम् । तदेतत् ग्रन्थान्तरोक्तेभ्यो ज्ञायते ।

तथाहि–

वाचकमुख्यस्य शिवश्रिय प्रकाशयशस प्रशिष्येण ।
शिष्येण घोषनन्दिक्षमणस्यैकादशाङ्गविद ॥ १ ॥
वाचनया च महावाचकक्षमणमुण्डपादशिष्यस्य ।
शिष्येण वाचकाचार्यमूलनाम्न प्रथितकीर्ते ॥ २ ॥
न्यग्रोधिकाप्रसूतेन विहरता पुरवरे कुसुमनाम्नि ।
कौभीषणिना स्वातितनयेन वात्सीसुतेनार्घ्यम् ॥ ३ ॥
अर्हद्वचन सम्यगुरुक्रमेणागत समुपधार्य ।
दु खार्त्त च दुरागमविहतमतिं लोकमवलोक्य ॥ ४ ॥
इदमुच्चैर्नागरवाचकेन सत्त्वानुकम्पया दृब्धम् ।
तत्त्वार्थाधिगमाख्य स्पष्टमुमास्वातिना शास्त्रम् ॥ ५ ॥
यस्तत्त्वाधिगमाख्य ज्ञास्यति च करिष्यते च तत्रोक्तम् ।
सोऽव्याबाधसुखाख्य प्राप्स्यत्यचिरेण परमार्थम् ॥ ६ ॥

एते पूर्व शिवभक्ता आसन् । पश्चाज्जिनदर्शनाज्जिनधर्मानुयायिनोऽभवन्निति भक्तामरस्तोत्रवृत्तितो ज्ञायते ।

एतेषा ग्रन्था —१ तत्त्वार्थाधिगमसूत्राणि । २ तत्त्वार्थाधिगमसूत्रभाष्यम् । ३ प्रशमरतिप्रकरणम् । ४ जम्बूद्वीपसमासप्रकरणम् । ५ पूजाप्रकरणम् । ६ श्रावकप्रज्ञप्ति । ७ क्षेत्रविचार ।

श्रीजिनप्रभसूरिरितितीर्थकल्पे प्रशमरते श्रीहरिभद्रटीकाया चैव निर्देशो यत् श्रीउमास्वातिमहर्षिभि प्रकरणपञ्चशती प्रणीतेति । तत एव श्वेताम्बरसम्प्रदाये एतेषा पञ्चशतप्रकरणप्रणेतृत्वेन प्रसिद्धि । तथा चोक्त वादिदेवसूरिभि स्याद्वादरत्नाकरे प्रथमपरिच्छेद तृतीयसूत्रे (पृ ४८ प १०) 'पञ्चशतीप्रकरणप्रणयनप्रवीणैरत्र भवद्भिरुमास्वातिवाचकमुख्यै ' इति ।

अथ प्रकृततत्त्वार्थाधिगमसूत्रभाष्यविषय उच्यते–

इद भाष्य सरलसरम्यपदघटित

' सूत्रार्थो वर्ण्यते यत्र वाक्यै सूत्रानुसारिभि ।
स्वपदानि च वर्ण्यन्ते भाष्य भाष्यविदो विदु ॥१॥'

इति लक्षणानुसारि सर्वव्याख्यातिशायीति प्रतिपदमनुभूतमस्माभि ।

अत्र भाष्ये पूर्वेषा ग्रन्थकृता न क्वापि निर्देश । केवल मतभेदप्रदर्शन

समये केचित्, एके इत्यादिसामान्यनिर्देश क्वचिद् दृश्यते। तथापि इन्द्रियमिन्द्रलिङ्गमित्यादि (२-१५) द्रव्य च भव्ये (१-५) इति व्याकरणविषये पाणिनिसूत्रादिक दृश्यते।

पेडा (१०-६) अनुवीचि (७-३) इति शब्दौ भाष्ये देशीभाषास्था वुपयोजितौ दृश्येते। यत संस्कृतभाषाया पेडाशब्दो न लभ्यते कोशेषु। तथा अनुवीचिशब्दो देशीभाषास्थ इति सिद्धसेनगणिटीकाया प ४३' प २ निर्दश।

त मध्ये मेरुरित्यादि ३।१० सूत्र भाष्ये यश्च सख्यानिर्देश स गणित शास्त्रविरुद्ध इति सिद्धसेनगणिटीकाया निरूपितम्।

## ३ प्रकाशनपरिचय।

आर्हतमतप्रभाकरपरिचयद्वारा यथा प्रतिश्रुत तथैवेतस्य सभाष्यतत्त्वार्थाधिगमसूत्रग्रन्थस्य पूर्वमत्र मुद्रितस्यापि विशेषसस्करणघटितस्य प्रकाशन यावच्छक्ति कृतम्। तथा चात्र सूत्रभाष्यविषयकम तरङ्गबहिरङ्ग परीक्षण कृतम्। तथाऽधोभागेऽर्थदर्शिका पारिभाषिकशब्दाना यथायथ स्वरूपस्य बोधिकाऽल्पिष्या सविस्तर मुद्रापिता येन जैनमतजिज्ञासूना विशेषत सौकर्य स्यात्। अत्र १ हरिभद्रसूरि व्याख्या (भा इ लिखित पुस्तकम्) २ सिद्धसेनगणिव्याख्या (भा इ लिखितपुस्तकम्) ३ यशोविजयजीटीका ४ तत्त्वार्थटिप्पणकम् ५ जैनतत्त्वप्रदीप (न्यायविशारदेत्यादिविरुदभूषितमुनिश्रीमगलविजयजीकृत) ६ प सुखलालजी अनूदितार्थसार कर्मग्रन्था ७ विविधोपोद्घातादयश्च सविस्तरमुपयोजिता अतस्तत्तेषा ग्रन्थकृता महाभागाना पुस्तकप्रदायिना पण्डितवरेण्याना प्रतिष्ठ दर्शनामप्रप्रदायिना मुनिश्रीदर्शनविजयजी-श्रेष्ठिजीवनचन्द्र साकरचन्द्र-कुवरजी आनन्दजी इत्येतेषा महाशयाना चानुग्रहभरोद्वहन स्वकर्तव्य मन्ये। यदि न साहाय्यमतया तर्हि नेतत्कार्य निर्वोढु पारयेयेति सुदृढ प्रत्येमि। अर्जुनचोरादीना मरुदेवीस्कन्दकचरित प्रतिमादीना विशदवर्णन च विस्तरभयादत्र न सगृहीत तथापि तत्तत्स्थलीयटिप्पण्या तद्विषया ग्रन्था निर्दिष्टास्तेभ्यो विज्ञेय जिज्ञासुभि। अत्र पञ्च परिशिष्टानि सन्ति। प्रथम परिशिष्ट सूत्रदशाध्यायी। केवलसूत्रपाठेनोपवासफल लभ्यते श्रद्धालुभिस्ततस्तदुपयोगाय दशाध्याय्या प्रथम निर्देश। सूत्राणामकारादिक्रमसूचि द्वितीय परिशिष्टम्। ३ तृतीयपरिशिष्ट सूत्रपाठे श्वेताम्बरदिगम्बरवैमत्यम्। ४ चतुर्थपरिशिष्ट उपयोजितग्रन्थाना सूचि। ५ पञ्चमपरिशिष्ट पारिभाषिकशब्दानामकारादिक्रमेण सूचि। एव रीत्या समुच्चय विदुषा पुरतो निधीयते।

प्रमोदादिह स्वकर्तव्यं निवेद्यते यदन्तरा समापयितुं न पारयामि प्रास्ताविकं तदेतन्मायानाप व्याकरणाचार्यैर्दीक्षितागोविन्दापाठकोपाह्वयैर्धरशास्त्रिणामनुग्रहभरनिर्देशो नाम। महाभागैः सहृदयैरेभिः कार्यकालव्ययमविगणय्य शास्त्रीयग्रन्थपक्षादरेणोपकृतोऽहं सर्वथा प्रकाशनेऽस्य ग्रन्थस्य। यदि न स्यात् साहाय्यमेतेषां तर्हि प्रकाशनकार्यं विदादायकारिटिप्पणीयुतं प्रास्ताविकं च सर्वाङ्गीणं नव मया प्रकाशयितुं शक्येतेति निर्दिशाम्यहमल्पादोनापि आत्मानमत्युक्तिभाजनं करोमि। अत पर सवान् विदुषो विज्ञापयामि यदत्र समुपलभ्यमानास्त्रुटीर्विशोध्यानुग्राह्योऽयं जन इति सप्रार्थये —

पुण्यपत्तनम्।<br>आश्विनशुक्लप्रतिपद्<br>वीरसंवत् २४ २

विद्वद्वशंवद<br>मोतीलाल लाधाजी



# प्रथमोऽध्यायः ।



सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ॥ १ ॥
तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् ॥ २ ॥
तन्निसर्गादधिगमाद्वा ॥ ३ ॥
जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम् ॥ ४ ॥
नामस्थापनाद्रव्यभावतस्तन्न्यासः ॥ ५ ॥
प्रमाणनयैरधिगमः ॥ ६ ॥
निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः ॥ ७ ॥
सत्संख्याक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वैश्च ॥ ८ ॥
मतिश्रुतावधिमनःपर्यायकेवलानि ज्ञानम् ॥ ९ ॥
तत्प्रमाणे ॥ १० ॥
आद्ये परोक्षम् ॥ ११ ॥
प्रत्यक्षमन्यत् ॥ १२ ॥
मतिः स्मृतिः संज्ञा चिन्ताभिनिबोध इत्यनर्थान्तरम् ॥ १३ ॥
तदिन्द्रियानिन्द्रियनिमित्तम् ॥ १४ ॥
अवग्रहेहापा(वा)यधारणाः ॥ १५ ॥
बहुबहुविधक्षिप्रानिश्रितानुक्तध्रुवाणां सेतराणाम् ॥ १६ ॥
अर्थस्य ॥ १७ ॥
व्यञ्जनस्यावग्रहः ॥ १८ ॥
न चक्षुरनिन्द्रियाभ्याम् ॥ १९ ॥
श्रुतं मतिपूर्वं द्व्यनेकद्वादशभेदम् ॥ २० ॥
द्विविधोऽवधिः ॥ २१ ॥
भवप्रत्ययो नारकदेवानाम् ॥ २२ ॥
यथोक्तनिमित्तः षड्विकल्पः शेषाणाम् ॥ २३ ॥
ऋजुविपुलमती मनःपर्यायः ॥ २४ ॥
विशुद्ध्यप्रतिपाताभ्यां तद्विशेषः ॥ २५ ॥
विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनःपर्याययोः ॥ २६ ॥
मतिश्रुतयोर्निबन्धः सर्वद्रव्येष्वसर्वपर्यायेषु ॥ २७ ॥

रूपिष्ववधेः ॥ २८ ॥
तदनन्तभागे मनःपर्ययस्य ॥ २९ ॥
सर्वद्रव्यपर्यायेषु केवलस्य ॥ ३० ॥
एकादीनि भाज्यानि युगपदेकस्मिन्ना चतुर्भ्यः ॥ ३१ ॥
मतिश्रुतावधयो विपर्ययश्च ॥ ३२ ॥
सदसतोरविशेषाद्यदृच्छोपलब्धेरुन्मत्तवत् ॥ ३३ ॥
नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दा नयाः ॥ ३४ ॥
आद्यशब्दौ द्वित्रिभेदौ ॥ ३५ ॥
इति प्रथमोऽध्यायः ॥ १ ॥

---

## अथ द्वितीयोऽध्यायः ।

औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च ॥ १ ॥
द्विनवाष्टादशैकविंशतित्रिभेदा यथाक्रमम् ॥ २ ॥
सम्यक्त्वचारित्रे ॥ ३ ॥
ज्ञानदर्शनदानलाभभोगोपभोगवीर्याणि च ॥ ४ ॥
ज्ञानाज्ञानदर्शनदानादिलब्धयश्चतुस्त्रित्रिपञ्चभेदाः सम्यक्त्वचारित्रसंयमासंयमाश्च ॥ ५ ॥
गतिकषायलिङ्गमिथ्यादर्शनाज्ञानासंयतासिद्धत्वलेश्याश्चतुश्चतुस्त्र्येकैकैकैकषड्भेदाः ॥ ६ ॥
जीवभव्याभव्यत्वादीनि च ॥ ७ ॥
उपयोगो लक्षणम् ॥ ८ ॥
स द्विविधोऽष्टचतुर्भेदः ॥ ९ ॥
संसारिणो मुक्ताश्च ॥ १० ॥
समनस्कामनस्काः ॥ ११ ॥
संसारिणस्त्रसस्थावराः ॥ १२ ॥
पृथिव्यप्तेजोवायुवनस्पतयः स्थावराः ॥ १३ ॥
तेजोवायू द्वीन्द्रियादयश्च त्रसाः ॥ १४ ॥
पञ्चेन्द्रियाणि ॥ १५ ॥
द्विविधानि ॥ १६ ॥
निर्वृत्त्युपकरणे द्रव्येन्द्रियम् ॥ १७ ॥

लब्ध्युपयोगौ भावेन्द्रियम् ॥ १८ ॥

उपयोगः स्पर्शादिषु ॥ १९ ॥

स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि ॥ २० ॥

स्पर्शरसगन्धवर्णशब्दास्तेषामर्थाः ॥ २१ ॥

श्रुतमनिन्द्रियस्य ॥ २२ ॥

वाय्वन्तानामेकम् ॥ २३ ॥

कृमिपिपीलिकाभ्रमरमनुष्यादीनामेकैकवृद्धानि ॥ २४ ॥

संज्ञिनः समनस्काः ॥ २५ ॥

विग्रहगतौ कर्मयोगः ॥ २६ ॥

अनुश्रेणि गतिः ॥ २७ ॥

अविग्रहा जीवस्य ॥ २८ ॥

विग्रहवती च संसारिणः प्राक् चतुर्भ्यः ॥ २९ ॥

एकसमयोऽविग्रहः ॥ ३० ॥

एकं द्वौ वानाहारकः ॥ ३१ ॥

सम्मूर्छनगर्भोपपाता जन्म ॥ ३२ ॥

सचित्तशीतसंवृताः सेतरा मिश्राश्चैकशस्तद्योनयः ॥ ३३ ॥

जराय्वण्डपोतजानां गर्भः ॥ ३४ ॥

नारकदेवानामुपपातः ॥ ३५ ॥

शेषाणां सम्मूर्छनम् ॥ ३६ ॥

औदारिकवैक्रियाहारकतैजसकार्मणानि शरीराणि ॥ ३७ ॥

तेषां परं परं सूक्ष्मम् ॥ ३८ ॥

प्रदेशतोऽसंख्येयगुणं प्राक् तैजसात् ॥ ३९ ॥

अनन्तगुणे परे ॥ ४० ॥

अप्रतिघाते ॥ ४१ ॥

अनादिसम्बन्धे च ॥ ४२ ॥

सर्वस्य ॥ ४३ ॥

तदादीनि भाज्यानि युगपदेकस्याचतुर्भ्यः ॥ ४४ ॥

निरुपभोगमन्त्यम् ॥ ४५ ॥

गर्भसम्मूर्छनजमाद्यम् ॥ ४६ ॥

वैक्रियमौपपातिकम् ॥ ४७ ॥

लब्धिप्रत्ययं च ॥ ४८ ॥

शुभं विशुद्धमव्याघाति चाहारकं चतुर्दशपूर्वधरस्यैव ॥ ४९ ॥

नारकसम्मूर्छिनो नपुंसकानि ॥ ५० ॥

न देवाः ॥ ५१ ॥
औपपातिकचरमदेहोत्तमपुरुषासंख्येयवर्षायुषोऽनपवर्त्यायुषः ॥ ५२ ॥
इति द्वितीयोऽध्यायः ॥ २ ॥

---

# अथ तृतीयोऽध्यायः ।

रत्नशर्करावालुकापङ्कधूमतमोमहातमःप्रभाभूमयो घनाम्बुवाता-
काशप्रतिष्ठाः सप्ताधोऽधः पृथुतराः ॥ १ ॥
तासु नरकाः ॥ २ ॥
नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रियाः ॥ ३ ॥
परस्परोदीरितदुःखाः ॥ ४ ॥
संक्लिष्टासुरोदीरितदुःखाश्च प्राक् चतुर्थ्याः ॥ ५ ॥
तेष्वेकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमा सत्त्वानां
परा स्थितिः ॥ ६ ॥
जम्बूद्वीपलवणादयः शुभनामानो द्वीपसमुद्राः ॥ ७ ॥
द्विर्द्विर्विष्कम्भाः पूर्वपूर्वपरिक्षेपिणो वलयाकृतयः ॥ ८ ॥
तन्मध्ये मेरुनाभिर्वृत्तो योजनशतसहस्रविष्कम्भो
जम्बूद्वीपः ॥ ९ ॥
तत्र भरतहैमवतहरिविदेहरम्यकहैरण्यवतैरा
वतवर्षाः क्षेत्राणि ॥ १० ॥
तद्विभाजिनः पूर्वापरायता हिमवन्महाहिमवन्निषधनील-
रुक्मिशिखरिणो वर्षधरपर्वताः ॥ ११ ॥
द्विर्धातकीखण्डे ॥ १२ ॥
पुष्करार्धे च ॥ १३ ॥
प्राग्मानुषोत्तरान्मनुष्याः ॥ १४ ॥
आर्या म्लिशश्च ॥ १५ ॥
भरतैरावतविदेहाः कर्मभूमयोऽन्यत्र देवकुरूत्तरकुरुभ्यः ॥ १६ ॥
नृस्थिती परापरे त्रिपल्योपमान्तर्मुहूर्ते ॥ १७ ॥
तिर्यग्योनीनां च ॥ १८ ॥
इति तृतीयोऽध्यायः ॥ ३ ॥

---

लब्ध्युपयोगौ भावेन्द्रियम् ॥ १८ ॥
उपयोगः स्पर्शादिषु ॥ १९ ॥
स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि ॥ २० ॥
स्पर्शरसगन्धवर्णशब्दास्तेषामर्थाः ॥ २१ ॥
श्रुतमनिन्द्रियस्य ॥ २२ ॥
वाय्वन्तानामेकम् ॥ २३ ॥
कृमिपिपीलिकाभ्रमरमनुष्यादीनामेकैकवृद्धानि ॥ २४ ॥
संज्ञिनः समनस्काः ॥ २५ ॥
विग्रहगतौ कर्मयोगः ॥ २६ ॥
अनुश्रेणि गतिः ॥ २७ ॥
अविग्रहा जीवस्य ॥ २८ ॥
विग्रहवती च संसारिणः प्राक् चतुर्भ्यः ॥ २९ ॥
एकसमयोऽविग्रहः ॥ ३० ॥
एकं द्वौ वानाहारकः ॥ ३१ ॥
सम्मूर्छनगर्भोपपाता जन्म ॥ ३२ ॥
सचित्तशीतसंवृताः सेतरा मिश्राश्चैकशस्तद्योनयः ॥ ३३ ॥
जरायुजाण्डपोतजानां गर्भः ॥ ३४ ॥
नारकदेवानामुपपातः ॥ ३५ ॥
शेषाणां सम्मूर्छनम् ॥ ३६ ॥
औदारिकवैक्रियिकाहारकतैजसकार्मणानि शरीराणि ॥ ३७ ॥
तेषां परं परं सूक्ष्मम् ॥ ३८ ॥
प्रदेशतोऽसंख्येयगुणं प्राक् तैजसात् ॥ ३९ ॥
अनन्तगुणे परे ॥ ४० ॥
अप्रतिघाते ॥ ४१ ॥
अनादिसम्बन्धे च ॥ ४२ ॥
सर्वस्य ॥ ४३ ॥
तदादीनि भाज्यानि युगपदेकस्याचतुर्भ्यः ॥ ४४ ॥
निरुपभोगमन्त्यम् ॥ ४५ ॥
गर्भसम्मूर्छनजमाद्यम् ॥ ४६ ॥
वैक्रियिकमौपपातिकम् ॥ ४७ ॥
लब्धिप्रत्ययं च ॥ ४८ ॥
शुभं विशुद्धमव्याघाति चाहारकं चतुर्दशपूर्वधरस्यैव ॥ ४९ ॥
नारकसम्मूर्छिनो नपुंसकानि ॥ ५० ॥

न दृष्टा ॥ ५१ ॥
ओपपादिकचरमदेहोत्तमपुरुषासंख्येयवर्षायुषोऽनपवर्त्यायुषः ॥ ५२ ॥
इति द्वितीयोऽध्यायः ॥ २ ॥

# अथ तृतीयोऽध्यायः ।

रत्नशर्करावालुकापङ्कधूमतमोमहातमःप्रभाभूमयो घनाम्बुवाताकाशप्रतिष्ठाः सप्ताधोऽधः पृथुतराः ॥ १ ॥
तासु नरकाः ॥ २ ॥
नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रियाः ॥ ३ ॥
परस्परोदीरितदुःखाः ॥ ४ ॥
संक्लिष्टासुरोदीरितदुःखाश्च प्राक् चतुर्थ्याः ॥ ५ ॥
तेष्वेकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमा सत्त्वानां परा स्थितिः ॥ ६ ॥
जम्बूद्वीपलवणोदादयः शुभनामानो द्वीपसमुद्राः ॥ ७ ॥
द्विर्द्विर्विष्कम्भाः पूर्वपूर्वपरिक्षेपिणो वलयाकृतयः ॥ ८ ॥
तन्मध्ये मेरुनाभिर्वृत्तो योजनशतसहस्रविष्कम्भो जम्बूद्वीपः ॥ ९ ॥
तत्र भरतहैमवतहरिविदेहरम्यकहैरण्यवतैरावतवर्षाः क्षेत्राणि ॥ १० ॥
तद्विभाजिनः पूर्वापरायता हिमवन्महाहिमवन्निषधनीलरुक्मिशिखरिणो वर्षधरपर्वताः ॥ ११ ॥
द्विर्धातकीखण्डे ॥ १२ ॥
पुष्करार्धे च ॥ १३ ॥
प्राङ्मानुषोत्तरान्मनुष्याः ॥ १४ ॥
आर्या म्लेच्छाश्च ॥ १५ ॥
भरतैरावतविदेहाः कर्मभूमयोऽन्यत्र देवकुरूत्तरकुरुभ्यः ॥ १६ ॥
नृस्थिती परापरे त्रिपल्योपमान्तर्मुहूर्ते ॥ १७ ॥
तिर्यग्योनीनां च ॥ १८ ॥
इति तृतीयोऽध्यायः ॥ ३ ॥

# अथ चतुर्थोऽध्यायः ।

देवाश्चतुर्णिकायाः ॥ १ ॥
तृतीयः पीतलेश्यः ॥ २ ॥
दशाष्टपञ्चद्वादशविकल्पाः कल्पोपपन्नपर्यन्ताः ॥ ३ ॥
इन्द्रसामानिकत्रायस्त्रिंशपारिषदात्मरक्षलोकपालानीक
प्रकीर्णकाभियोग्यकिल्विषिकाश्चैकशः ॥ ४ ॥
त्रायस्त्रिंशलोकपालवर्ज्या व्यन्तरज्योतिष्काः ॥ ५ ॥
पूर्वयोर्द्वीन्द्राः ॥ ६ ॥
पीतान्तलेश्याः ॥ ७ ॥
कायप्रवीचारा आ ऐशानात् ॥ ८ ॥
शेषाः स्पर्शरूपशब्दमनःप्रवीचारा द्वयोर्द्वयोः ॥ ९ ॥
परेऽप्रवीचाराः ॥ १० ॥
भवनवासिनोऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधि
द्वीपदिक्कुमाराः ॥ ११ ॥
व्यन्तराः किन्नरकिम्पुरुषमहोरगगन्धर्वयक्षराक्षसभूत
पिशाचाः ॥ १२ ॥
ज्योतिष्काः सूर्याश्चन्द्रमसो ग्रहनक्षत्रप्रकीर्णतारकाश्च ॥ १३ ॥
मेरुप्रदक्षिणानित्यगतयो नृलोके ॥ १४ ॥
तत्कृतः कालविभागः ॥ १५ ॥
बहिरवस्थिताः ॥ १६ ॥
वैमानिकाः ॥ १७ ॥
कल्पोपपन्नाः कल्पातीताश्च ॥ १८ ॥
उपर्युपरि ॥ १९ ॥
सौधर्मैशानसानत्कुमारमाहेन्द्रब्रह्मलोकलान्तकमहाशुक्र
सहस्रारेष्वानतप्राणतयोरारणाच्युतयोर्नवसु ग्रैवेयकेषु
विजयवैजयन्तजयन्तापराजितेषु सर्वार्थसिद्धे च ॥ २० ॥
स्थितिप्रभावसुखद्युतिलेश्याविशुद्धीन्द्रियावधिविषयतोऽधिकाः ॥२१॥
गतिशरीरपरिग्रहाभिमानतो हीनाः ॥ २२ ॥
पीतपद्मशुक्ललेश्या द्वित्रिशेषेषु ॥ २३ ॥
प्राग्ग्रैवेयकेभ्यः कल्पाः ॥ २४ ॥

ब्रह्मलोकालया लौकान्तिकाः ॥ २५ ॥
सारस्वतादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधमरुतोऽरिष्टाश्च ॥२६॥
विजयादिषु द्विचरमाः ॥ २७ ॥
औपपातिकमनुष्येभ्यः शेषास्तिर्यग्योनयः ॥ २८
स्थितिः ॥ २९ ॥
भवनेषु दक्षिणार्धाधिपतीनां पल्योपममध्यर्धम् ॥ ३० ॥
शेषाणां पादोने ॥ ३१ ॥
असुरेन्द्रयोः सागरोपममधिकं च ॥ ३२ ॥
सौधर्मादिषु यथाक्रमम् ॥ ३३ ॥
सागरोपमे ॥ ३४ ॥
अधिके च ॥ ३५ ॥
सप्त सनत्कुमारे ॥ ३६ ॥
विशेषत्रिसप्तदशैकादशत्रयोदशपञ्चदशभिरधिकानि च ॥ ३७ ॥
आरणाच्युतादूर्ध्वमेकैकेन नवसु ग्रैवेयकेषु विजयादिषु
सर्वार्थसिद्धे च ॥ ३८ ॥
अपरा पल्योपममधिकं च ॥ ३९ ॥
सागरोपमे ॥ ४० ॥
अधिके च ॥ ४१ ॥
परतः परतः पूर्वा पूर्वानन्तरा ॥ ४२ ॥
नारकाणां च द्वितीयादिषु ॥ ४३ ॥
दश वर्षसहस्राणि प्रथमायाम् ॥ ४४ ॥
भवनेषु च ॥ ४५ ॥
व्यन्तराणां च ॥ ४६ ॥
परा पल्योपमम् ॥ ४७ ॥
ज्योतिष्काणामधिकम् ॥ ४८ ॥
ग्रहाणामेकम् ॥ ४९ ॥
नक्षत्राणामर्धम् ॥ ५० ॥
तारकाणां चतुर्भागः ॥ ५१ ॥
जघन्या त्वष्टभागः ॥ ५२ ॥
चतुर्भागः शेषाणाम् ॥ ५३ ॥
इति चतुर्थोऽध्यायः ॥ ४ ॥

अर्पितानर्पितसिद्धे ॥ ३१ ॥
स्निग्धरूक्षत्वाद्बन्ध ॥ ३२ ॥
न जघन्यगुणानाम् ॥ ३३ ॥
गुणसाम्ये सदृशानाम् ॥ ३४ ॥
द्व्यधिकादिगुणानां तु ॥ ३५ ॥
बन्धे समाधिकौ पारिणामिकौ ॥ ३६ ॥
गुणपर्यायवद् द्रव्यम् ॥ ३७ ॥
कालश्चेत्येके ॥ ३८ ॥
सोऽनन्तसमय ॥ ३९ ॥
द्रव्याश्रया निर्गुणा गुणा ॥ ४० ॥
तद्भाव परिणाम ॥ ४१ ॥
अनादिरादिमांश्च ॥ ४२ ॥
रूपिष्वादिमान् ॥ ४३ ॥
योगोपयोगौ जीवेषु ॥ ४४ ॥
इति पञ्चमोऽध्याय ॥ ५ ॥

---

## अथ षष्ठोऽध्याय ।

---

कायवाङ्मन कर्म योग ॥ १ ॥
स आस्रव ॥ २ ॥
शुभ पुण्यस्य ॥ ३ ॥
अशुभ पापस्य ॥ ४ ॥
सकषायाकषाययो साम्परायिकेर्यापथयो ॥ ५ ॥
अव्रतकषायेन्द्रियक्रिया पञ्चचतु पञ्चपञ्चविंशतिसंख्या पूर्वस्य भेदा ॥ ६ ॥
तीव्रमन्दज्ञाताज्ञातभाववीर्याधिकरणविशेषेभ्यस्तद्विशेष ॥ ७ ॥
अधिकरणं जीवाजीवा ॥ ८ ॥
आद्य संरम्भसमारम्भारम्भयोगकृतकारितानुमतकषायविशेषैस्त्रिस्त्रिस्त्रिश्चतुश्चैकश ॥ ९ ॥
निर्वर्तनानिक्षेपसंयोगनिसर्गा द्विचतुर्द्वित्रिभेदा परम् ॥ १० ॥
तत्प्रदोषनिह्नवमात्सर्यान्तरायासादनोपघाता ज्ञानदर्शनावरणयो ॥ ११ ॥
दु खशोकतापाक्रन्दनवधपरिदेवनान्यात्मपरोभयस्थान्यसद्वेद्यस्य ॥ १२ ॥

भूतव्रत्यनुकम्पा दानं सरागसंयमादियोगः क्षान्तिः शौचमिति सद्वेद्यस्य ॥ १३ ॥
केवलिश्रुतसङ्घधर्मदेवावर्णवादो दर्शनमोहस्य ॥ १४ ॥
कषायोदयात्तीव्रात्मपरिणामश्चारित्रमोहस्य ॥ १५ ॥
बह्वारम्भपरिग्रहत्वं च नारकस्यायुषः ॥ १६ ॥
माया तैर्यग्योनस्य ॥ १७ ॥
अल्पारम्भपरिग्रहत्वं स्वभावमार्दवार्जवं च मानुषस्य ॥ १८ ॥
निःशीलव्रतत्वं च सर्वेषाम् ॥ १९ ॥
सरागसंयमसंयमासंयमाकामनिर्जराबालतपांसि दैवस्य ॥ २० ॥
योगवक्रता विसंवादनं चाशुभस्य नाम्नः ॥ २१ ॥
विपरीतं शुभस्य ॥ २२ ॥
दर्शनविशुद्धिर्विनयसंपन्नता शीलव्रतेष्वनतिचारोऽभीक्ष्णं ज्ञानोपयोगसंवेगौ शक्तितस्त्यागतपसी सङ्घसाधुसमाधिर्वैयावृत्यकरणमर्हदाचार्यबहुश्रुतप्रवचनभक्तिरावश्यकापरिहाणिर्मार्गप्रभावना प्रवचनवत्सलत्वमिति तीर्थकरत्वस्य ॥ २३ ॥
परात्मनिन्दाप्रशंसे सदसद्गुणाच्छादनोद्भावने च नीचैर्गोत्रस्य ॥ २४ ॥
तद्विपर्ययो नीचैर्वृत्त्यनुत्सेकौ चोत्तरस्य ॥ २५ ॥
विघ्नकरणमन्तरायस्य ॥ २६ ॥
इति षष्ठोऽध्यायः ॥ ६ ॥

---

## अथ सप्तमोऽध्यायः ।

हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतम् ॥ १ ॥
देशसर्वतोऽणुमहती ॥ २ ॥
तत्स्थैर्यार्थं भावनाः पञ्च पञ्च ॥ ३ ॥
हिंसादिष्विहामुत्र चापायावद्यदर्शनम् ॥ ४ ॥
दुःखमेव वा ॥ ५ ॥
मैत्रीप्रमोदकारुण्यमाध्यस्थानि सत्त्वगुणाधिकक्लिश्यमानाविनेयेषु ॥ ६ ॥
जगत्कायस्वभावौ च संवेगवैराग्यार्थम् ॥ ७ ॥
प्रमत्तयोगात्प्राणव्यपरोपणं हिंसा ॥ ८ ॥
असदभिधानमनृतम् ॥ ९ ॥
अदत्तादानं स्तेयम् ॥ १० ॥

मैथुनमब्रह्म ॥ ११ ॥
मूर्च्छा परिग्रह ॥ १२ ॥
नि शल्यो व्रती ॥ १३ ॥
अगार्यनगारश्च ॥ १४ ॥
अणुव्रतोऽगारी ॥ १५ ॥
दिग्देशानर्थदण्डविरतिसामायिकपौषधोपवासोपभोगपरिभोगातिथिसंविभागव्रतसम्पन्नश्च ॥ १६ ॥
मारणान्तिकीं सल्लेखना जोषिता ॥ १७ ॥
सम्यग्दृष्टेरतिचारा ॥ १८ ॥
व्रतशीलेषु पञ्च पञ्च यथाक्रमम् ॥ १९ ॥
बन्धवधच्छेदातिभारारोपणान्नपानानिरोधा ॥ २० ॥
मिथ्योपदेशरहस्याभ्याख्यानकूटलेखक्रियान्यासापहारसाकारमन्त्रभेदा ॥ २१ ॥
स्तेनप्रयोगतदाहृतादानविरुद्धराज्यातिक्रमहीनाधिकमानोन्मानप्रतिरूपकव्यवहारा ॥ २२ ॥
परविवाहकरणेत्वरपरिगृहीतापरिगृहीतागमनानङ्गक्रीडातीव्रकामाभिनिवेशा ॥ २३ ॥
क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदासकुप्यप्रमाणातिक्रमा ॥ २४ ॥
ऊर्ध्वाधस्तिर्यग्व्यतिक्रमक्षेत्रवृद्धिस्मृत्यन्तर्धानानि ॥ २५ ॥
आनयनप्रेष्यप्रयोगशब्दरूपानुपातपुद्गलक्षेपा ॥ २६ ॥
कन्दर्पकौत्कुच्यमौखर्यासमीक्ष्याधिकरणोपभोगाधिकत्वानि ॥ २७ ॥
योगदुष्प्रणिधानानादरस्मृत्यनुपस्थापनानि ॥ २८ ॥
अप्रत्यवेक्षिताप्रमार्जितोत्सर्गादाननिक्षेपसंस्तारोपक्रमणानादरस्मृत्यनुपस्थापनानि ॥ २९ ॥
सचित्तसम्बद्धसम्मिश्राभिषवदुष्पक्वाहाराः ॥ ३० ॥
सचित्तनिक्षेपपिधानपरव्यपदेशमात्सर्यकालातिक्रमा ॥ ३१ ॥
जीवितमरणाशंसामित्रानुरागसुखानुबन्धनिदानकरणानि ॥ ३२ ॥
अनुग्रहार्थं स्वस्यातिसर्गो दानम् ॥ ३३ ॥
विधिद्रव्यदातृपात्रविशेषात्तद्विशेष ॥ ३४ ॥
इति सप्तमोऽध्याय ॥ ७ ॥

---

# अष्टमोऽध्यायः ।



मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः ॥ १ ॥

सकषायत्वाज्जीवः कर्मणो योग्यान्पुद्गलानादत्ते ॥ २ ॥

स बन्धः ॥ ३ ॥

प्रकृतिस्थित्यनुभावप्रदेशास्तद्विधयः ॥ ४ ॥

आद्यो ज्ञानदर्शनावरणवेदनीयमोहनीयायुष्कनामगोत्रान्तरायाः ॥ ५ ॥

पञ्चनवद्व्यष्टाविंशतिचतुर्द्विचत्वारिंशद्द्विपञ्चभेदा यथाक्रमम् ॥ ६ ॥

मत्यादीनाम् ॥ ७ ॥

चक्षुरचक्षुरवधिकेवलानां निद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानगृद्धिवेदनीयानि च ॥ ८ ॥

सदसद्वेद्ये ॥ ९ ॥

दर्शनचारित्रमोहनीयकषायनोकषायवेदनीयाख्यास्त्रिद्विषोडशनवभेदाः सम्यक्त्वमिथ्यात्वतदुभयानि कषायनोकषायावनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनविकल्पाश्चैकशः क्रोधमानमायालोभाः हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुंनपुंसकवेदाः ॥ १० ॥

नारकतैर्यग्योनमानुषदैवानि ॥ ११ ॥

गतिजातिशरीराङ्गोपाङ्गनिर्माणबन्धनसङ्घातसंस्थानसंहननस्पर्शरसगन्धवर्णानुपूर्व्यगुरुलघूपघातपराघातातपोद्योतोच्छ्वासविहायोगतयः प्रत्येकशरीरत्रससुभगसुस्वरशुभसूक्ष्मपर्याप्तस्थिरादेययशांसि सेतराणि तीर्थकरत्वं च ॥ १२ ॥

उच्चैर्नीचैश्च ॥ १३ ॥

दानादीनाम् ॥ १४ ॥

आदितस्तिसृणामन्तरायस्य च त्रिंशत्सागरोपमकोटीकोट्यः परा स्थितिः ॥ १५ ॥

सप्ततिर्मोहनीयस्य ॥ १६ ॥

नामगोत्रयोर्विंशतिः ॥ १७ ॥

त्रयस्त्रिंशत्सागरोपमाण्यायुष्कस्य ॥ १८ ॥

अपरा द्वादश मुहूर्ता वेदनीयस्य ॥ १९ ॥

नामगोत्रयोरष्टौ ॥ २० ॥

शेषाणामन्तर्मुहूर्तम् ॥ २१ ॥

विपाकोऽनुभावः ॥ २२ ॥

स यथानाम ॥ २३ ॥

ततश्च निर्जरा ॥ २४ ॥

नामप्रत्यया सर्वतो योगविशेषात्सूक्ष्मैकक्षेत्रावगाढस्थिता सर्वात्मप्रदेशेष्वनन्तानन्तप्रदेशा ॥ २५ ॥

सद्वेद्यसम्यक्त्वहास्यरतिपुरुषवेदशुभायुर्नामगोत्राणि पुण्यम् ॥२६॥

इति अष्टमोऽध्याय ॥ ८ ॥

---

# अथ नवमोऽध्याय ।

आस्रवनिरोध संवर ॥ १ ॥

स गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रै ॥ २ ॥

तपसा निर्जरा च ॥ ३ ॥

सम्यग्योगनिग्रहो गुप्ति ॥ ४ ॥

ईर्याभाषैषणादाननिक्षेपोत्सर्गा समितय ॥ ५ ॥

उत्तम क्षमामार्दवार्जवशौचसत्यसंयमतपस्त्यागाकिंचन्यब्रह्मचर्याणि धर्म ॥ ६ ॥

अनित्याशरणसंसारैकत्वान्यत्वाशुचित्वास्रवसंवरनिर्जरालोकबोधिदुर्लभधर्मस्वाख्याततत्त्वानुचिन्तनमनुप्रेक्षा ॥ ७ ॥

मार्गाच्यवननिर्जरार्थं परिषोढव्या परीषहा ॥ ८ ॥

क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्याक्रोशवधयाचनालाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाज्ञानादर्शनानि ॥ ९ ॥

सूक्ष्मसंपरायच्छद्मस्थवीतरागयोश्चतुर्दश ॥ १० ॥

एकादश जिने ॥ ११ ॥

बादरसंपराये सर्वे ॥ १२ ॥

ज्ञानावरणे प्रज्ञाज्ञाने ॥ १३ ॥

दर्शनमोहान्तराययोरदर्शनालाभौ ॥ १४ ॥

चारित्रमोहे नाग्न्यारतिस्त्रीनिषद्याक्रोशयाचनासत्कारपुरस्कारा ॥ १५ ॥

वेदनीये शेषा ॥ १६ ॥

एकादयो भाज्या युगपदेकोनविंशते ॥ १७ ॥

सामायिकच्छेदोपस्थाप्यपरिहारविशुद्धिसूक्ष्मसंपराययथाख्यातानि चारित्रम् ॥ १८ ॥

अनशनावमौदर्यवृत्तिपरिसंख्यानरसपरित्यागविविक्तशय्यासनकायक्लेशा बाह्यं तप ॥ १९ ॥

प्रायश्चित्तविनयवैयावृत्त्यस्वाध्यायव्युत्सर्गध्यानान्युत्तरम् ॥ २० ॥
नवचतुर्दशपञ्चद्विभेदं यथाक्रमं प्राग्ध्यानात् ॥ २१ ॥
आलोचनप्रतिक्रमणतदुभयविवेकव्युत्सर्गतपश्छेदपरिहारोप स्थापनानि ॥ २२ ॥
ज्ञानदर्शनचारित्रोपचाराः ॥ २३ ॥
आचार्योपाध्यायतपस्विशैक्षग्लानगणकुलसङ्घसाधुसमनोज्ञानाम् ॥ २४ ॥
वाचनाप्रच्छनानुप्रेक्षाम्नायधर्मोपदेशाः ॥ २५ ॥
बाह्याभ्यन्तरोपध्योः ॥ २६ ॥
उत्तमसंहननस्यैकाग्रचिन्तानिरोधो ध्यानम् ॥ २७ ॥
आमुहूर्तात् ॥ २८ ॥
आर्तरौद्रधर्मशुक्लानि ॥ २९ ॥
परे मोक्षहेतू ॥ ३० ॥
आर्तममनोज्ञानां सम्प्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहारः ॥ ३१ ॥
वेदनायाश्च ॥ ३२ ॥
विपरीतं मनोज्ञानाम् ॥ ३३ ॥
निदानं च ॥ ३४ ॥
तदविरतदेशविरतप्रमत्तसंयतानाम् ॥ ३५ ॥
हिंसानृतस्तेयविषयसंरक्षणेभ्यो रौद्रमविरतदेशविरतयोः ॥ ३६ ॥
आज्ञापायविपाकसंस्थानविचयाय धर्ममप्रमत्तसंयतस्य ॥ ३७ ॥
उपशान्तक्षीणकषाययोश्च ॥ ३८ ॥
शुक्ले चाद्ये पूर्वविदः ॥ ३९ ॥
परे केवलिनः ॥ ४० ॥

पृथक्त्वैकत्ववितर्कसूक्ष्मक्रियाप्रतिपातिव्युपरतक्रियानिवृत्तीनि ॥ ४१ ॥
तत्त्र्येककाययोगायोगानाम् ॥ ४२ ॥
एकाश्रये सवितर्के पूर्वे ॥ ४३ ॥
अविचारं द्वितीयम् ॥ ४४ ॥
वितर्कः श्रुतम् ॥ ४५ ॥
विचारोऽर्थव्यञ्जनयोगसङ्क्रान्तिः ॥ ४६ ॥

सम्यग्दृष्टिश्रावकविरतानन्तवियोजकदर्शनमोहक्षपकोपशमकोपशान्तमोहक्षपकक्षीणमोहजिनाः क्रमशोऽसंख्येयगुणनिर्जराः ॥ ४७ ॥
पुलाकबकुशकुशीलनिर्ग्रन्थस्नातका निर्ग्रन्थाः ॥ ४८ ॥

सयमश्रुतप्रतिसेवनातीर्थलिङ्गलेश्योपपातस्थानविकल्पत साध्या ॥ ४९ ॥

इति नवमोऽध्याय ॥ ९ ॥

# अथ दशमोऽध्यायः ।



मोहक्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलम् ॥ १ ॥

बन्धहेत्वभावनिर्जराभ्याम् ॥ २ ॥

कृत्स्नकर्मक्षयो मोक्ष ॥ ३ ॥

औपशमिकादिभव्यत्वाभावाच्चान्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्य ॥ ४ ॥

तदनन्तरमूर्ध्वं गच्छत्यालोकान्तात् ॥ ५ ॥

पूर्वप्रयोगादसङ्गत्वाद्बन्धच्छेदात्तथागतिपरिणामाच्च तद्गति ॥ ६ ॥

क्षेत्रकालगतिलिङ्गतीर्थचारित्रप्रत्येकबुद्धबोधितज्ञानावगाहनान्तरसंख्याल्पबहुत्वत साध्या ॥ ७ ॥

इति दशमोऽध्याय ॥ १० ॥

# २ द्वितीय परिशिष्टम् ।



---

## ३ तृतीय परिशिष्टम् ।

### प्रथमोऽध्यायः ।

| सूत्राङ्क । दिगम्बराम्नायीसूत्रपाठ । | सूत्राङ्क । श्वेताम्बराम्नायीसूत्रपाठ । |
|---|---|
| १५ अवग्रहेहावायधारणा । | १५ अवग्रहेहापायधारणा । |
| × × | २१ द्विविधोऽवधि । |
| २१ भवप्रत्ययोऽवधिर्देवनारकाणाम् । | २२ भवप्रत्ययो नारकदेवानाम् । |
| २२ क्षयोपशमनिमित्त षड्विकल्प शेषाणाम् । | २३ यथोक्तनिमित्त । |
| २३ ऋजुविपुलमती मनःपर्यय । | २४ पर्याय । |
| २८ तदनन्तभागे मनःपर्ययस्य । | २९ पर्यायस्य । |
| ३३ नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवम्भूता नया । | ३४ सूत्रशब्दा नया । |
| × × | ३५ आद्यशब्दौ द्वित्रिभेदौ । |

### द्वितीयोऽध्याय. ।

| | |
|---|---|
| ५ ज्ञानाज्ञानदर्शनलब्धयश्चतुस्त्रित्रिपञ्चभेदा सम्यक्त्वचारित्रसंयमासंयमाश्च । | ५ दर्शनदानादिलब्धय । |
| १३ पृथिव्यप्तेजोवायुवनस्पतय स्थावरा । | १३ पृथिव्यम्बुवनस्पतय स्थावरा । |
| १४ द्वीन्द्रियादयस्त्रसा । | १४ तेजोवायू द्वीन्द्रियादयश्च त्रसा । |
| × × | १९ उपयोग स्पर्शादिषु । |
| २ स्पर्शरसगन्धवर्णशब्दास्तदर्था । | २१ शब्दास्तेषामर्था । |
| २२ वनस्पत्यन्तानामेकम् । | २३ वाय्वन्तानामेकम् । |
| २९ एकसमयाऽविग्रहा । | ३० एकसमयोऽविग्रह । |
| ३० एकं द्वौ त्रीन्वाऽनाहारक । | ३१ एकं द्वौ वाऽनाहारक । |
| ३१ सम्मूर्छनगर्भोपपादा जन्म । | ३२ सम्मूर्छनगर्भोपपाता जन्म । |
| ३३ जरायुजाण्डजपोतानां गर्भ । | ३४ जराय्वण्डपोतजानां गर्भ । |
| ३४ देवनारकाणामुपपाद । | ३५ नारकदेवानामुपपात । |
| ३७ परं परं सूक्ष्मम् । | ३८ तेषां परं परं सूक्ष्मम् । |
| ४० अप्रतीघाते । | ४१ अप्रतिघाते । |
| ४६ औपपादिकं वैक्रियिकम् । | ४७ वैक्रियमौपपातिकम् । |
| ४८ तैजसमपि । | × × |
| ४९ शुभं विशुद्धमव्याघाति चाहारकं प्रमत्तसंयतस्यैव । | ४९ चतुर्दशपूर्वधरस्यैव । |

| | |
|---|---|
| ५२ शेषास्त्रिवेदा । | × × |
| ५३ औपपादिकचरमोत्तमदेहा सङ्ख्येयवर्षायुषोऽनपवर्त्यायुष । | ५२ औपपातिकचरमदेहोत्तमपुरुषासङ्ख्ये • । |

## तृतीयोऽध्यायः ।

| | |
|---|---|
| १ रत्नशर्करावालुकापङ्कधूमतमोमहातमप्रभा भूमयो घनाम्बुवाताकाशप्रतिष्ठा सप्ताधोऽध । | १ सप्ताधोऽध पृथुतरा । |
| २ तासु त्रिंशत्पञ्चविंशतिपञ्चदशदशत्रिपञ्चोनैकनरकशतसहस्राणि पञ्च चैव यथाक्रमम् । | २ तासु नरका । |
| ३ नारका नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रिया । | ३ नित्याशुभतरलेश्या । |
| ७ जम्बूद्वीपलवणोदादय शुभनामानो द्वीपसमुद्रा । | ७ जम्बूद्वीपलवणादय शुभनामानो द्वीपसमुद्रा । |
| १० भरतहैमवतहरिविदेहरम्यकहैरण्यवतैरावतवर्षा क्षेत्राणि । | १० तत्र भरत । |
| १२ हेमार्जुनतपनीयवैडूर्यरजतहेममया । | × × |
| १३ मणिविचित्रपार्श्वा उपरि मूले च तुल्यविस्तारा । | × × |
| १४ पद्ममहापद्मतिगिञ्छकेसरिमहापुण्डरीकपुण्डरीका ह्रदास्तेषामुपरि । | × × |
| १५ प्रथमो योजनसहस्रायामस्तदर्धविष्कम्भो ह्रद । | × × |
| १६ दशयोजनावगाह । | × × |
| १७ तन्मध्ये योजन पुष्करम् । | × × |
| १८ तद्द्विगुणद्विगुणा ह्रदा पुष्कराणि च । | × × |
| १९ तन्निवासिन्यो देव्य श्रीह्रीधृतिकीर्तिबुद्धिलक्ष्म्य पल्योपमस्थितय ससामानिकपरिषत्का । | × × |
| २० गङ्गासिन्धुरोहिद्रोहितास्याहरिद्धरिकान्तासीतासीतोदानारीनरकान्तासुवर्णरूप्यकूलारक्तारक्तोदा सरितस्तन्मध्यगा । | × × |
| २१ द्वयोर्द्वयो पूर्वा पूर्वगा । | × × |
| २२ शेषास्त्वपरगा । | × × |
| २३ चतुर्दशनदीसहस्रपरिवृत्ता गङ्गासिन्ध्वादयो नद्य । | × × |
| २४ भरत षड्विंशतिपञ्चयोजनशतविस्तार षट् चैकोनविंशतिभागा योजनस्य । | × × |

| | |
|---|---|
| २५ तद्द्विगुणद्विगुणविस्तारा वर्षधरवर्षावि | × × |
| देहान्ता । | × × |
| २६ उत्तरा दक्षिणतुल्या । | × × |
| २७ भरतैरावतयोर्वृद्धिह्रासौ षट्समयाभ्या मुत्सर्पण्यवसर्पिणीभ्याम् । | |
| २८ ताभ्यामपरा भूमयोऽवस्थिता । | × × |
| २९ एकद्वित्रिपल्योपमस्थितयो हैमवतकहा रिवर्षकदैवकुरवक । | × × |
| ३० तथोत्तरा । | × × |
| ३१ विदेहेषु सङ्ख्येयकाला । | × × |
| ३२ भरतस्य विष्कम्भो जम्बूद्वीपस्य नवति शतभाग । | × × |
| ३८ नृस्थिती परावरे त्रिपल्योपमान्तर्मुहूर्ते । | १७ परापरे । |
| ३९ तिर्यग्योनिजानां च । | १८ तिर्यग्योनीना च । |

## चतुर्थोऽध्याय ।

| | |
|---|---|
| २ आदितस्त्रिषु पीतान्तलेश्या । | २ तृतीय पीतलेश्य । |
| × × | ७ पीतान्तलेश्या । |
| ८ शेषा स्पर्शरूपशब्दमनप्रवीचारा । | ८ प्रवीचारा द्वयोर्द्वया । |
| १२ ज्योतिष्का सूर्यचन्द्रमसौ ग्रहनक्षत्र प्रकीर्णकतारकाश्च । | १३ प्रकीर्ण तारका । |
| १९ सौधर्मैशानसानत्कुमारमाहेन्द्रब्रह्मब्रह्मो त्तरलान्तवकापिष्ठशुक्रमहाशुक्रशतारसहस्रा रेष्वानतप्राणतयोरारणाच्युतयोर्नवसु ग्रैवे यकेषु विजयवैजयन्तजयन्तापराजितेषु सर्वार्थसिद्धौ च । | २० सौधर्मैशानसानत्कुमारमाहेन्द्रब्रह्मलोक ऽान्तकमहाशुक्रसहस्रारे सर्वार्थसिद्धे च । |
| २२ पीतपद्मशुक्ललेश्या द्वित्रिशेषेषु । | २३ लेश्या हि त्रिशेषेषु । |
| २४ ब्रह्मलोकालया लौकान्तिका । | २४ लोकान्तिका । |
| २८ स्थितिरसुरनागसुपर्णद्वीपशेषाणा साग रोपमत्रिपल्योपमार्द्धहीनमिता । | २९ स्थिति । |
| × × | ३० भवनेषु दक्षिणार्धाधिपतीनां पल्योपमम- ध्यर्धम् । |
| × × | ३१ शेषाणां पादोने । |
| × × | ३२ असुरेन्द्रयोः सागरोपममधिकं च । |
| २९ सौधर्मैशानयो सागरोपमेऽधिके । | ३३ सौधर्मादिषु यथाक्रमम् । |
| × × | ३४ सागरोपमे । |
| × × | ३५ अधिके च |
| ३० सानत्कुमारमाहेन्द्रयो सप्त । | ३६ सप्त सानत्कुमारे । |
| ३१ त्रिसप्तनवैकादशत्रयोदशपञ्चदशभिर धिकानि तु । | ३७ विशेषत्रिसप्तदशैकादशत्रयोदशपञ्चदश- भिरधिकानि च । |

| | |
|---|---|
| ३३ अपरा पल्योपममधिकम् । | ३९ अपरा पल्योपममधिकं च । |
| × × | ४० सागरोपमे । |
| × × | ४१ अधिके च । |
| ३९ परा पल्योपममधिकम् । | ४७ परा पल्योपमम् । |
| ४० ज्योतिष्काणां च । | ४८ ज्योतिष्काणामधिकम् । |
| × × | ४९ ग्रहाणामेकम् । |
| × × | ५० नक्षत्राणामर्धम् । |
| × × | ५१ तारकाणां चतुर्भागः । |
| ४१ तदष्टभागोऽपरा । | ५२ जघन्या त्वष्टभागः । |
| × × | ५३ चतुर्भागः शेषाणाम् । |
| ४२ लौकान्तिकानामष्टौ सागरोपमाणि सर्वेषाम् । | × × |

## पञ्चमोऽध्यायः ।

| | |
|---|---|
| २ द्रव्याणि । | २ द्रव्याणि जीवाश्च । |
| ३ जीवाश्च । | × × |
| ९ सङ्ख्येयासङ्ख्येयाश्च पुद्गलानाम् । | ७ असङ्ख्येयाः प्रदेशा धर्माधर्मयोः । |
| × × | ८ जीवस्य च । |
| १६ प्रदेशसंहारविसर्पाभ्यां प्रदीपवत् । | १६ विसर्गाभ्यां । |
| २६ भेदसङ्घातेभ्य उत्पद्यन्ते । | २६ सङ्घातभेदेभ्य उत्पद्यन्ते । |
| २९ सद्द्रव्यलक्षणम् । | × × |
| ३७ बन्धेऽधिकौ पारिणामिकौ च । | ३७ बन्धे समाधिकौ पारिणामिकौ । |
| ३९ कालश्च । | ३९ कालश्चेत्येके । |
| × × | ४२ अनादिरादिमांश्च । |
| × × | ४३ रूपिष्वादिमान् । |
| × × | ४४ योगोपयोगौ जीवेषु । |

## षष्ठोऽध्यायः ।

| | |
|---|---|
| ३ शुभः पुण्यस्याशुभः पापस्य । | ३ शुभः पुण्यस्य । |
| × × | ४ अशुभः पापस्य । |
| ५ इन्द्रियकषायाव्रतक्रियाः पञ्चचतुःपञ्चपञ्चविंशतिसंख्याः पूर्वस्य भेदाः । | ६ अव्रतकषायेन्द्रियक्रियाः । |
| ६ तीव्रमन्दज्ञाताज्ञातभावाधिकरणवीर्यविशेषेभ्यस्तद्विशेषः । | ७ भाववीर्याधिकरणविशेषेभ्यस्तद्विशेषः । |
| १७ अल्पारम्भपरिग्रहत्वं मानुषस्य । | १८ अल्पारम्भपरिग्रहत्वं स्वभावमार्दवार्जवं च मानुषस्य । |
| × × | × × |
| १८ स्वभावमार्दवं च । | × × |
| २१ सम्यक्त्वं च । | |
| २३ तद्विपरीतं शुभस्य | २२ विपरीतं शुभस्य । |

| | |
|---|---|
| २४ दर्शनविशुद्धिर्विनयसम्पन्नता शीलव्रतेष्वनतिचारोऽभीक्ष्णज्ञानोपयोगसंवेगौ शक्तितस्त्यागतपसी साधुसमाधिर्वैयावृत्त्यकरणमर्हदाचार्यबहुश्रुतप्रवचनभक्तिरावश्यकापरिहाणिर्मार्गप्रभावना प्रवचनवत्सलत्वमिति तीर्थकरत्वस्य । | २३ … भीक्ष्ण … तपसीसङ्घसाधुसमाधिवैयावृत्त्यकर … तीर्थकृत्त्वस्य । |

सप्तमोऽध्यायः ।

| | | |
|---|---|---|
| ४ वाङ्मनोगुप्तीर्यादाननिक्षेपणसमित्यालोकितपानभोजनानि पञ्च । | × | × |
| ५ क्रोधलोभभीरुत्वहास्यप्रत्याख्यानान्यनुवीचिभाषणं च पञ्च । | × | × |
| ६ शून्यागारविमोचितावासपरोपरोधाकरणभैक्ष्यशुद्धिसधर्माविसंवादाः पञ्च । | × | × |
| ७ स्त्रीरागकथाश्रवणतन्मनोहराङ्गनिरीक्षणपूर्वरतानुस्मरणवृष्येष्टरसस्वशरीरसंस्कारत्यागाः पञ्च । | × | × |
| ८ मनोज्ञामनोज्ञेन्द्रियविषयरागद्वेषवर्जनानि पञ्च । | × | × |
| ९ हिंसादिष्विहामुत्रापायावद्यदर्शनम् । | ४ हिंसादिष्विहामुत्र चापायावद्यदर्शनम् । | |
| १२ जगत्कायस्वभावौ वा संवेगवैराग्यार्थम् । | ७ जगत्कायस्वभावौ च संवेगवैराग्यार्थम् । | |
| २८ परविवाहकरणेत्वरिकापरिगृहीतापरिगृहीतागमनानङ्गक्रीडाकामतीव्राभिनिवेशाः । | २३ परविवाहकरणेत्वरपरिगृहीता … | |
| ३२ कन्दर्पकौत्कुच्यमौखर्यासमीक्ष्याधिकरणोपभोगपरिभोगानर्थक्यानि । | २७ कन्दर्पकौत्कुच्य … णोपभोगाधिकत्वानि । | |
| ३४ अप्रत्यवेक्षिताप्रमार्जितोत्सर्गादानसंस्तरोपक्रमणानादरस्मृत्यनुपस्थानानि । | २९ … संस्तारो … पस्थापनानि । | |
| ३७ जीवितमरणाशंसामित्रानुरागसुखानुबन्धनिदानानि । | ३२ … निदानकरणानि । | |

अष्टमोऽध्यायः ।

| | |
|---|---|
| २ सकषायत्वाज्जीवः कर्मणो योग्यान्पुद्गलानादत्ते स बन्धः | २ … पुद्गलानादत्ते । |
| × × | ३ स बन्धः । |
| ४ आद्यो ज्ञानदर्शनावरणवेदनीयमोहनीयायुर्नामगोत्रान्तरायाः । | ५ … मोहनीयायुष्कनाम … । |
| ६ मतिश्रुतावधिमनःपर्ययकेवलानाम् । | ७ मत्यादीनाम् । |
| ७ चक्षुरचक्षुरवधिकेवलानां निद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानगृद्धयश्च । | ८ … स्त्यानगृद्धिवेदनीयानि च । |

| | |
|---|---|
| ९ दर्शनचारित्रमोहनीयाकषायकषायवेदनीयाख्यास्त्रिद्विनवषोडशभेदाः सम्यक्त्वमिथ्यात्वतदुभयान्यकषायकषायौ हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुंनपुंसकवेदा अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानसंज्वलनविकल्पाश्चैकशः क्रोधमानमायालोभाः । | १० मोहनीयकषायनोकषाय तदुभयानि कषायनोकषायावनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनविकल्पाश्चैकशः क्रोधमानमायालोभा हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुंनपुंसकवेदाः । |
| १३ दानलाभभोगोपभोगवीर्याणाम् । | १४ दानादीनाम् । |
| १ विंशतिर्नामगोत्रयोः । | १७ नामगोत्रयोर्विंशतिः । |
| १७ त्रयस्त्रिंशत्सागरोपमाण्यायुष्कस्य । | १८ युष्कस्य । |
| १९ शेषाणामन्तर्मुहूर्ता । | २१ मुहूर्तम् । |
| २४ नामप्रत्ययाः सर्वतो योगविशेषात्सूक्ष्मैकक्षेत्रावगाढस्थिताः सर्वात्मप्रदेशेष्वनन्तानन्तप्रदेशाः । | २५ क्षेत्रा वगाढस्थिताः । |
| २५ सद्वेद्यशुभायुर्नामगोत्राणि पुण्यम् । | २६ सद्वेद्यसम्यक्त्वहास्यरतिपुरुषवेद शुभायु । |
| २६ अतोऽन्यत्पापम् । | × × |

## नवमोऽध्यायः ।

| | |
|---|---|
| ६ उत्तमक्षमामार्दवार्जवसत्यशौचसंयमतपस्त्यागाकिंचन्यब्रह्मचर्याणि धर्मः । | ६ उत्तम क्षमा । |
| १७ एकादयो भाज्या युगपदेकस्मिन्नैकोनविंशतेः । | १७ विंशतेः । |
| १८ सामायिकच्छेदोपस्थापनापरिहारविशुद्धिसूक्ष्मसंपराययथाख्यातानि चारित्रम् । | १८ यथाख्यातानि चारित्रम् । |
| २२ आलोचनप्रतिक्रमणतदुभयविवेकव्युत्सर्गतपश्छेदपरिहारोपस्थापनाः । | २२ स्थापनानि । |
| २७ उत्तमसंहननस्यैकाग्रचिन्तानिरोधो ध्यानमान्तर्मुहूर्तात् । | २७ निरोधो ध्यानम् । |
| × × | २८ आ मुहूर्तात् । |
| | ३३ विपरीतं मनोज्ञानाम् । |
| ३१ विपरीतं मनोज्ञस्य । | ३७ |
| ३६ आज्ञापायविपाकसंस्थानविचयाय धर्म्यम् | धर्म्यमप्रमत्तसंयतस्य । |
| × × | ३८ उपशान्तक्षीणकषाययोश्च । |
| ३७ शुक्ले चाद्ये पूर्वविदः । | ३९ शुक्ले चाद्ये । |
| ४ त्र्येकयोगकाययोगायोगानाम् । | ४२ तत्त्र्येककाययोगा । |
| ४१ एकाश्रये सवितर्कवीचारे पूर्वे । | ४३ सवितर्कं पूर्वे । |

## दशमोऽध्यायः ।

| | |
|---|---|
| २ बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्षः । | २ निर्जराभ्याम् । |
| × × | ३ कृत्स्नकर्मक्षयो मोक्षः । |
| ३ औपशमिकादि भव्यत्वानां च । | ४ औपशमिकादिभव्यत्वाभावाच्चान्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः । |
| ४ अन्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः । | × × |
| ५ तदनन्तरमूर्ध्वं गच्छत्यालोकान्तात् । | ५ गच्छत्या । |
| ६ पूर्वप्रयोगादसङ्गत्वाद्बन्धच्छेदात्तथा गतिपरिणामाच्च । | ६ तद्गतिः । |
| ७ आविद्धकुलालचक्रवत् व्यपगतलेपालाबुवदेरण्डबीजवदग्निशिखावच्च । | × × |
| ८ धर्मास्तिकायाभावात् । | × × |

# ४ चतुर्थं परिशिष्टम् ।

## उपयोजितग्रन्थानां सूचिः ।

| | |
|---|---|
| १ श्रीहरिभद्रसूरिटीका | लिखितपुस्तकम् । |
| २ श्रीसिद्धसेनगणिटीका | „ |
| ३ श्रीयशोविजयजीटीका | श्रेष्ठि माणिकलालमनसुखभाईमुद्रापिता । |
| ४ तत्त्वार्थटिप्पणकम् | , |
| ५ चत्वारः कर्मग्रन्थाः | पं सुखलालजी ' एैरनूदिता । |
| ६ प्राचीनाश्चत्वारः कर्मग्रन्थाः | श्रीआत्मानन्दसभामुद्रापिता । |
| ७ अभिधानराजेन्द्र | श्रीराजेन्द्रसूरि । |
| ८ प्रज्ञापनासूत्रम् | सुरतमुद्रापितम् । |
| ९ नन्दिसूत्रम् | |
| १० स्थानाङ्गसूत्रम् | |
| ११ भगवतीसूत्रम् | „ |
| १२ उत्तराध्ययनसूत्रम् | श्रीभावविजयगणिव्याख्या । |
| १३ समवायाङ्गसूत्रम् | सुरतमुद्रापितम् । |
| १४ विपाकसूत्रम् | , |
| १५ अनुयोगद्वारसूत्रम् | |
| १६ प्रवचनसारोद्धार | , |
| १७ आचाराङ्गसूत्रम् | „ |
| १८ विशेषावश्यकभाष्यम् | यशोविजयजीजैनग्रन्थमाला |

# ५ पञ्चमम् परिशिष्टम्

---

ॐ नमः सर्वज्ञाय

श्रीमत्-उमास्वातिवाचकप्रवरप्रणीतानि

# सभाष्यतत्त्वार्थाधिगमसूत्राणि ।

## सम्बन्धकारिका ।

सम्यग्दर्शनशुद्धं यो ज्ञानं विरतिमेव चाप्नोति ।
दुःखनिमित्तमपीदं तेन सुलब्धं भवति जन्म ॥१॥
जन्मनि कर्मक्लेशैरनुबद्धेऽस्मिंस्तथा प्रयतितव्यम् ।
कर्मक्लेशाभावो यथा भवत्येष परमार्थः ॥२॥
परमार्थालाभे वा दोषेष्वारम्भकस्वभावेषु ।
कुशलानुबन्धमेव स्यादनवद्यं यथा कर्म ॥ ३ ॥
कर्माहितमिह चामुत्र चाधमतमो नरः समारभते ।
इहफलमेव त्वधमो विमध्यमस्तूभयफलार्थम् ॥ ४ ॥
परलोकहितायैव प्रवर्तते मध्यमः क्रियासु सदा ।
मोक्षायैव तु घटते विशिष्टमतिरुत्तमः पुरुषः ॥ ५ ॥
यस्तु कृतार्थोऽप्युत्तममवाप्य धर्मं परेभ्य उपदिशति ।
नित्यं स उत्तमेभ्योऽप्युत्तम इति पूज्यतम एव ॥ ६ ॥
तस्मादर्हति पूजामर्हन्नेवोत्तमोत्तमो लोके ।
देवर्षिनरेन्द्रेभ्यः पूज्येभ्योऽप्यन्यसत्त्वानाम् ॥ ७ ॥
अभ्यर्चनादर्हतां मनःप्रसादस्ततः समाधिश्च ।
तस्मादपि निःश्रेयसमतो हि तत्पूजनं न्याय्यम् ॥ ८ ॥

तीर्थप्रवर्तनफलं यत्प्रोक्तं कर्म तीर्थकरनाम ।
तस्योदयात्कृतार्थोऽप्यर्हंस्तीर्थं प्रवर्तयति ॥ ९ ॥
तत्स्वाभाव्यादेव प्रकाशयति भास्करो यथा लोकम् ।
तीर्थप्रवर्तनाय प्रवर्तते तीर्थकर एवम् ॥ १० ॥
यः शुभकर्मासेवनभावितभावो भवेष्वनेकेषु ।
जज्ञे ज्ञातेक्ष्वाकुषु सिद्धार्थनरेन्द्रकुलदीपः ॥ ११ ॥
ज्ञानैः पूर्वाधिगतैरप्रतिपतितैर्मतिश्रुतावधिभिः ।
त्रिभिरपि शुद्धैर्युक्तः शैत्यद्युतिकान्तिभिरिवेन्दुः ॥१२॥
शुभसारसत्त्वसंहननवीर्यमाहात्म्यरूपगुणयुक्तः ।
जगति महावीर इति त्रिदशैर्गुणतः कृताभिख्यः ॥१३॥
स्वयमेव बुद्धतत्त्वः सत्त्वहिताभ्युद्यताचलितसत्त्वः ।
अभिनन्दितशुभसत्त्वः सेन्द्रैर्लौकान्तिकैर्देवैः ॥ १४ ॥
जन्मजरामरणार्त्तं जगदशरणमभिसमीक्ष्य निःसारम् ।
स्फीतमपहाय राज्यं शमाय धीमान्प्रवव्राज ॥ १५ ॥
प्रतिपद्याशुभशमनं निःश्रेयससाधकं श्रमणलिङ्गम् ।
कृतसामायिककर्मा व्रतानि विधिवत्समारोप्य ॥ १६ ॥
सम्यक्त्वज्ञानचारित्रसंवरतपःसमाधिबलयुक्तः ।

---

१ यस्योदये सति त्रिभुवनस्यापि पूज्यो भवति तद्रूपत्वं तीर्थकरनामकर्मणो लक्षणम् । तच्च कैवल्यावस्थायां विपच्यते ।

२ मतिश्रुतावधीनां लक्षणं सू० १।९ टिप्पन्यां द्रष्टव्यम् ।

३ यन्निमित्तकवज्रर्षभनाराचादिभेदभिन्नास्थिबन्धनरूपविशेषो भवति तद्रूपत्वं संहननस्य लक्षणम् ।

४ सम्यक्त्वम्—मोक्षाविरोधी आत्मनः परिणामः । यस्मिन् व्यक्ते सति आत्मनोऽन्तर्मुखप्रवृत्तिः । अस्यैव परिणामस्य फलं तत्त्वरुचिः । सम्यक्त्वे सिद्धे सति प्रशमसंवेगनिर्वेदानुकम्पास्तिक्यानि इति पञ्च प्रायो दृश्यन्ते । तथा तत्त्वार्थश्रद्धानलक्षणं सम्यक्त्वम् ।

चारित्रम् सावद्ययोगविरतिरूपत्वम् ।

संवर – आश्रवनिरोधनिमित्तकत्वं संवरस्य लक्षणम् । मनोवाक्कायलक्षणयोगाः शुभाशुभकर्म यस्मादाश्रवन्ति स आश्रवः ।

मोहादीनि निहत्याशुभानि चत्वारि कर्माणि ॥ १७ ॥
केवलमधिगम्य विभु स्वयमेव ज्ञानदर्शनमनन्तम् ।
लोकहिताय कृतार्थोऽपि देशयामास तीर्थमिदम् ॥१८॥
द्विविधमनेकद्वादशविध महाविषयममितगममयुक्तम् ।
ससारार्णवपारगमनाय दु खक्षयायालम् ॥ १९ ॥
ग्रन्थार्थवचनपटुभि प्रयत्नवद्भिरपि वादिभिर्निपुणै. ।
अनभिभवनीयमन्यैर्भास्कर इव सर्वतेजोभि ॥ २० ॥
कृत्वा त्रिकरणशुद्ध तस्मै परमर्षये नमस्कारम् ।
पूजयतमाय भगवते वीराय विलीनमोहाय ॥ २१ ॥
तत्त्वार्थाधिगमाख्य बह्वर्थं सग्रह लघुग्रन्थम् ।
वक्ष्यामि शिष्यहितमिममर्हद्वचनैकदेशस्य ॥ २२ ॥
महतोऽतिमहाविषयस्य दुर्गमग्रन्थभाष्यपारस्य ।
क शक्त प्रत्यास जिनवचनमहोदधे कर्तुम् ॥ २३ ॥
शिरसा गिरिं बिभित्सेदुच्चिक्षिप्सेच्च स क्षितिं दोर्भ्याम् ।
प्रतितीर्षेच्च समुद्र मित्सेच्च पुन कुशाग्रेण ॥ २४ ॥
व्योम्नीन्दु चिक्रमिषेन्मेरुगिरिं पाणिना चिकम्पयिषेत् ।
गत्यानिल जिगीषेच्चरमसमुद्र पिपासेच्च ॥ २५ ॥
खद्योतकप्रभाभि. सोऽभिबुभूषेच्च भास्कर मोहात् ।
योऽतिमहाग्रन्थार्थं जिनवचन सजिघृक्षेत ॥ २६ ॥

---

१ मोहादय —मोहज्ञानदर्शनावरणान्तराया ।

२ तीर्थ—वर्तमानप्रवचनरूप प्रथमम् ।

३ आमला अक्षरत्या गमा सयानो नया वक्ष्यमाणास्तैर्युतम् ।

४ काया वाक् मनश्चेत त्रीणि करणानि तै शुद्धमकल्मष, शुद्धानि वा त्रीणि करणान्यस्मिनिति त्रिकरणशुद्धम् । शाङ्करनखादि शापकात् निष्ठापरनिपात ।

५ प्रत्यास —सग्रह ।

६ मातु गणयितुमिच्छेत् ।

७ जिनवचनसग्रह कर्तुमिच्छेत् ।

एकमपि तु जिनवचनाद्यस्मान्निर्वाहकं पदं भवति।
श्रूयन्ते चानन्ताः सामायिकमात्रपदसिद्धाः[1] ॥ २७ ॥
तस्मात्तत्प्रामाण्यात् समासतो व्यासतश्च जिनवचनम्।
श्रेय इति निर्विचारं ग्राह्यं धार्यं च वाच्यं च ॥ २८ ॥
न भवति धर्मः श्रोतुः सर्वस्यैकान्ततो[2] हितश्रवणात्।
ब्रुवतोऽनुग्रहबुद्ध्या वक्तुस्त्वेकान्ततो भवति ॥ २९ ॥
श्रममविचिन्त्यात्मगतं तस्माच्छ्रेयः सदोपदेष्टव्यम्।
आत्मानं च परं च हि हितोपदेष्टानुगृह्णाति ॥ ३० ॥
नर्ते च मोक्षमार्गाद्धितोपदेशोऽस्ति जगति कृत्स्नेऽस्मिन्।
तस्मात्परमिममेवेति मोक्षमार्गं प्रवक्ष्यामि ॥ ३१ ॥

---

१ 'करोमि भदन्त! सामायिकमित्येतावतैव पदेन भावतः सुगृहीतेनानन्तकालेन अनन्ताः सिद्धाः' इत्युक्तं प्रवचने, उदाहरणमात्रं तु परमार्थे स्वाध्याय इति।

२ एकान्ततः—निश्चयेन।

# प्रथमोऽध्यायः ।

॥ सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग. ॥ १।१ ॥

१ सम्यग्दर्शन २ सम्यग्ज्ञान ३ सम्यक्चारित्रमित्येष त्रिविधो मोक्षमार्ग । त पुरस्ताल्लक्षणतो विधानतश्च विस्तरेणोपदेक्ष्याम । शास्त्रानुपूर्वीविन्यासार्थ तूद्देशमात्रमिदमुच्यते । एतानि च समस्तानि मोक्षसाधनानि । एकतराभावेऽप्यसाधनानीत्यतस्त्रयाणा ग्रहणम् । एषा च पूर्वलाभे भजनीयमुत्तरम् । उत्तरलाभे तु नियत पूर्वलाभ । तत्र सम्यगिति प्रशसार्थो निपात समञ्चतेर्वा भाव । दर्शनमिति । दृशेरव्यभिचारिणी सर्वेन्द्रियानिन्द्रियार्थप्राप्तिरेतत्सम्यग्दर्शनम् । प्रशस्त दर्शन सम्यग्दर्शनम् । सगत वा दर्शन सम्यग्दर्शनम् । एव ज्ञानचारित्रयोरपि ॥ १ ॥

॥ तत्त्वार्थश्रद्धान सम्यग्दर्शनम् ॥ १।२ ॥

तत्त्वानामर्थाना श्रद्धान तत्त्वेन वार्थाना श्रद्धान तत्त्वार्थश्रद्धानम्, तत् सम्यग्दर्शनम् । तत्त्वेन भावतो निश्चितमित्यर्थ. । तत्त्वानि जीवादीनि वक्ष्यन्ते । त एव चार्थास्तेषा श्रद्धान तेषु प्रत्ययावधारणम् । तदेव प्रशमसवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षण तत्त्वार्थश्रद्धान सम्यग्दर्शनमिति ॥२॥

---

१ वस्तुमात्रसकीर्तनमुद्देश ।

२ सम्यग्ज्ञानशब्देऽपि सम्यक् शब्द प्रशसार्थो निपात समञ्चतेवा, ज्ञानमिति च भाव एव, एव चारित्रमपि ।

३ अ १ सू ४

४ प्रशम –सुपरीक्षितप्रवक्तृप्रवाच्यप्रवचनतत्त्वाभिनिवेशाद् दोषाणामुपशम । इन्द्रियार्थपरिभोगनिवृत्तिर्वा । सवेग –ससारभीति । निर्वेद - विषयानभिष्वङ्ग । अनुकम्पा–निरुपधिपरदु खप्रहाणेच्छा । आस्तिक्यम्–अस्ति आत्मादिपदार्थजातम् इत्यपाभनिपस्य स आस्तिक । तस्य भाव आस्तिक्यम् ।

## ॥ तन्निसर्गादधिगमाद्वा ॥ ३ ॥

तदेतत्सम्यग्दर्शन द्विविध भवति । निसर्गसम्यग्दर्शनमधिगमसम्यग्दर्शन च । निसर्गादधिगमाद्वोत्पद्यत इति द्विहेतुक द्विविधम् । निसर्ग परिणाम स्वभाव अपरोपदेश इत्यनर्थान्तरम् । ज्ञानदर्शनोपयोगलक्षणो जीव इति वक्ष्यते । तस्यानादौ ससारे परिभ्रमत कर्मत एव कर्मण स्वकृतस्य बन्धनिकाचनोदयनिर्जरापेक्ष नारकतिर्यग्योनिमनुष्यामरभवग्रहणेषु विविध पुण्यपापफलमनुभवतो ज्ञान

---

१ आत्मनस्तीर्थकरायुपदेशादानमन्तरेण स्वत एव जन्तोर्यत् कर्मोपशमादिभ्यो जायते तन्निसर्गसम्यग्दर्शनम् ।

२ यत् तीर्थकरायुपदेशे सति बाह्यनिमित्तसव्यपेक्षमुपशमादिभ्यो जायते तदधिगमसम्यग्दर्शनम् ।

३ अनर्थान्तरम्–पर्याय ।

४ अ २ सू १, २, ३, ४, ५, ६, ७, ८

५ बन्धो ( अ ८ सू ३ ) नाम एकक्षेत्रावस्थितानां कर्मयोग्यस्कन्धाना ( स्कन्ध –स्कन्दन्ति शुष्यन्ति क्षीयन्ते च पुष्यन्ते पुद्गलाना चटनेन विघटनेन चेति स्कन्धा ) रागद्वेषस्नेहावलीढसकलात्मप्रदेशेष्वाहारपुद्गलानामिव ( पूरणगलनधर्माण पुद्गला ) परिणामक सम्बन्ध । निकाचना तु स्पृष्टानन्तरभाविनी बद्धस्य कर्मण सकलकरणायोग्यतावस्था । बद्ध नाम कर्मात्मप्रदेशै सह श्लिष्ट, यथा सूचय कलापीकृता परस्परेण बद्धा कथ्यन्ते । ता एवामी मीलितास्तान्विता समाभिव्यज्यमानान्तरा स्पृष्टा इति व्यपदिश्यन्ते ता एव पुन प्रताप्य यदा घनेन ताडिता प्रणष्टस्वविभागा एकपिण्डतामितास्तदा निकाचिता इति व्यपदेशमश्नुवते । एव कर्माण्यात्मप्रदेशेषु योजनीयम् । तस्यैव निकाचितस्य प्रकृत्यादि ( ८–४ ) बन्धरूपेणावस्थितस्योदयावलिका प्रविष्टस्य ( आवलिका–असख्येयसमयसघातात्मक कालविशेष । तासु श्रेणिषु प्रविश्य व्यवस्थिता ) प्रति क्षण यो विपाकानुभव स उदय । उदयानुभवसमनन्तरमेवापेतस्नेहलेश परिशटत्यतिसमय कर्म निर्जराव्यपदेशमङ्गीकरोति ।

६ उत्पत्तिस्थानम ।

७ प्रादुर्भाव ।

दर्शनोपयोगैस्वाभाव्यात् तानि तानि परिणामाध्यवसायस्थानान्तराणि गच्छतोऽनादिमिथ्यादृष्टेरपि सतः परिणामविशेषादपूर्वकरण तादृग्भवति येनास्यानुपदेशात्सम्यग्दर्शनमुत्पद्यत इत्येतन्निसर्गसम्यग्दर्शनम् । अधिगम अभिगम आगमो निमित्त श्रवण शिक्षा उपदेश इत्यनर्थान्तरम् । तदेव परोपदेशाद्यत्तत्त्वार्थश्रद्धान भवति तदधिगमसम्यग्दर्शनमिति ॥३॥

॥ जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम् ॥४॥

१ जीवा २ अजीवा ३ आस्रवा ४ बन्ध ५ संवरो ६ निर्जरा ७ मोक्ष इत्येष सप्तविधोऽर्थस्तत्त्वम् । एते वा सप्त पदार्थास्तत्त्वानि । ताल्लक्षणतो विधानतश्च पुरस्ताद्विस्तरेणोपदेक्ष्याम ।

नामस्थापनाद्रव्यभावतस्तन्न्यास ॥ ५ ॥

एभिर्नामादिभिश्चतुर्भिरनुयोगद्वारैस्तेषा जीवादीना तत्त्वाना न्यासो भवति । विस्तरेण लक्षणतो विधानतश्चाधिगमार्थं न्यासो निक्षेप इत्यर्थ । तद्यथा—१ नामजीव २ स्थापनाजीवो ३ द्रव्यजीवो ४ भावजीव इति । नाम, संज्ञा, कर्म इत्यनर्थान्तरम् ।

---

१ यदा यदोपयुङ्क्ते तदा तदा सुख्यह दु खितोऽहमिति साकारानाकारोपयोगबलाच्चेतयते तेनाप्यनुभव इत्यर्थ ।

२ अपूर्वकरणम् अप्राप्तपूर्व तात्परिणामाध्यवसायान्तर जीवेनेत्यपूर्वकरणमुच्यते । किंच भव्यजीवो येन परिणामेन रागद्वेषरूपा दुर्भेद्यग्रंथि लङ्घयति स परिणाम शास्त्रेऽपूर्वकरणमुच्यते । अय परिणाम कदाचिदेव लभ्यतेऽतस्तस्यापूर्वकरणमिति सज्ञा ।

३ जीव ( २-८ ), अजीवस्तद्विपरीत ( अ ५ ), आस्रव-आत्मधर्मत्वे सति कर्मबन्धासाधारणकारणम् ( ६-१, ६-२), बन्ध —अभिनवकर्मग्रहणम्, अभिनवपदेन सकर्मव्यवच्छेद ( ८ २, ८ ३), संवर –आश्रवनिरोध , विपाकात्तपसा वा कर्मपरिशाटो कर्मात्मसयोगध्वस निर्जरा(९–३), मोक्ष –कृत्स्नकर्मक्षयलक्षण (१०-३) आत्मन स्वभावसमवस्थानम् ।

४ अनुयोजनमनुयोग । अनुरूपो योग अनुयोग । अनुकूलो वा योगोऽनुयोग । अनुयोग –व्याख्यान विधिप्रतिषेधाभ्यामर्थप्ररूपणम् ।

चेतनावतोऽचेतनस्य वा द्रव्यस्य जीव इति नाम क्रियते स नाम जीव.॥ य काष्ठपुस्तचित्रकर्माक्षनिक्षेपादिषु स्थाप्यते जीव इति स स्थापनाजीवो देवताप्रतिकृतिवदिन्द्रो, रुद्र, स्कन्दो, विष्णु रिति ॥ द्रव्यजीव इति गुणपर्यायवियुक्त प्रज्ञास्थापितोऽनादिपा रिणामिकभावयुक्तो जीव उच्यते। अथवा शून्योऽय भङ्ग। यस्य ह्यजीवस्य सतो भव्य जीवत्व स्यात् स द्रव्यजीव स्यात्। अनिष्ट चैतत् ॥ भावतो जीवा औपशमिकक्षायिकक्षायोपशमिकौदयिकपा रिणामिकभावयुक्ता उपयोगलक्षणा ससारिणो मुक्ताश्च द्विविधा वक्ष्यन्ते। एवमजीवादिषु सर्वेष्वनुगन्तव्यम्।

---

१ जीवादीना स्वरूपानुभव प्रत्यभिमुखीभावरूपत्व पारिणामिकस्य लक्षणम्।

२ द्रव्यजीवविकल्पोऽय भङ्गो न सम्भवति। मृत्पिण्डो द्रव्यघट इत्यादौ भाव कारणतायामेव द्रव्यपदप्रवृत्तिनिमित्तत्वदर्शनात्। उक्तप्रकारेण प्रयोगाभावात्तत्र निषिद्ध लक्षणापत्ते ।

३ भव्यत्व सिद्धिगमनयोग्यत्वम।

४ प्रदेशविपाकेति द्विविधकर्मोदयनिरोध –उपशम। तज्जन्यो भाव औपशमिक।

५ कर्मणा सर्वथा क्षये सति प्रादुर्भवन् क्षायिको भाव ।

६ क्षयोपशमाभ्या पूर्वोक्ताभ्या जायमान क्षायोपशमिक ।

७ कर्मोदयाज्जायमान पर्याय औदयिको भाव ।

८ परिणमन परिणामो जीवत्वाद्याकारेण यद्भवन स पारिणामिक ।

९ ज्ञानदर्शनयो सम्यक् स्वविषयसीमानुल्लङ्घनेन धारणरूपत्वम् बाह्याभ्यन्तर निमित्तद्वये सति आत्मनो यथायोग चैतन्यानुकारिपरिणामविशेषरूपत्व वा उपयोगस्य लक्षणम्।

१० अ २ सू १०

११ अजीव इति नाम यस्य क्रियते स नामाजीव। स्थापनाजीव काष्ठादि न्यस्त, धर्मास्तिकायादेरपि (५–१) स्थापना स्मारकलिप्याकारेणाभिप्रायिकी भवत्येव। द्रव्याजीवो गुणादिवियुतो बुद्धिस्थापित। भावाजीवो गत्याद्युपग्रहकारी धर्मादि (५–१७, ५ १८, १९)। २ द्रव्यास्रव आत्मसमवेता पुद्गला अनुदिता रागा दिपरिणामन। भावास्रवस्तु त एवोदिता। ३ द्रव्यबन्धो निगडादि। भावबन्ध प्रकृत्यादि। ४ द्रव्यसवरोऽपिधानम्, भावसवरो गुप्त्यादिपरिणामापन्नो (७–६) जीव। ५ द्रव्यनिर्जरा मोक्षाधिकारशून्या क्लिष्टादीना भावनिर्जरा कर्मपरिशाट सम्य ग्ज्ञानाद्युपदेशानुष्ठानपूर्वक ।

पर्यायान्तरेणापि नामद्रव्य, स्थापनाद्रव्य, द्रव्यद्रव्यं, भावतो द्रव्यमिति । यस्य जीवस्याजीवस्य वा नाम क्रियते द्रव्यमिति तन्नामद्रव्यम् । यत्काष्ठपुस्तचित्रकर्माक्षनिक्षेपादिषु स्थाप्यते द्रव्यमिति तत् स्थापनाद्रव्यम् । देवताप्रतिकृतिवदिन्द्रो, रुद्र, स्कन्दो, विष्णुरिति । द्रव्यद्रव्य नाम गुणपर्यायवियुक्त प्रज्ञास्थापितं धर्मादीनामन्यतमत् । केचिदप्याहु 'यद्'द्रव्यतो द्रव्य भवति तच्च पुद्गलद्रव्यमेवेति प्रत्येतव्यम् । 'अणव स्कन्धाश्च' 'सघातभेदेभ्य उत्पद्यन्ते ' इति वक्ष्याम । भावतो–द्रव्याणि धर्मादीनि सगुणपर्यायाणि प्राप्तिलक्षणानि वक्ष्यन्ते । आगमतश्च प्राभृतज्ञो द्रव्यमिति भव्यमाह । 'द्रव्य च भव्ये' । भव्यमिति प्राप्यमाह । भूप्राप्तावात्मनेपदी । तदेव प्राप्यन्ते प्राप्नुवन्ति वा द्रव्याणि । एव सर्वेषामनादीनामादिमता च जीवादीनां भावाना मोक्षान्तानां तत्त्वाधिगमार्थं न्यास. कार्य इति ॥५॥

प्रमाणनयैरधिगम ॥६॥

एषां च जीवादीना तत्त्वाना यथोद्दिष्टानां नामादिभिर्न्य

---

१ प्रधानशब्दस्य तदर्थशब्दान्तराणि पर्याय । पर्यायादन्य पर्याय पर्यायान्तरम्, तेनाप्यस्य चतुष्टयस्य न्यास कार्य ।

२ अ ५ सू २५

३ अ ५ सू २६

४ अ ५ सू ३७

५ ' प्राभृत ' इति आगमे पूर्वाख्ये ( २–४९ ) कथ्यमाने ' प्राभृतज्ञ ' इति शब्दप्राभृतं, तच्च पूर्वेऽस्ति, यत इद व्याकरणमायात, तत् शब्दप्राभृत यो जानाति स प्राभृतज्ञो गुरुरेव ब्रवीति, न चैवमहमेव वच्मि इति भाव ।

६ पा सू ५–३–१०४ ।

७ पाणिनिधा पा चुरादिगणे ।

८ प्रमाणनयतत्त्वालोकालङ्कारे प १ सू १–२ । तत्त्वार्थ १–३५

९ अ १ सू ३५

१० अधिगम —ज्ञानम् ।

स्तानां प्रमाणनयैर्विस्तराधिगमो भवति ॥ तत्र प्रमाणं द्विविधम्। 'परोक्षं प्रत्यक्षं च' वक्ष्यते। चतुर्विधमित्येके। नयवादान्तरेण। नयाश्च नैगमादयो वक्ष्यन्ते ॥ ६ ॥

किं चान्यत्—

निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः ॥ ७ ॥

एभिश्च निर्देशादिभिः षड्भिरनुयोगद्वारैः सर्वेषां भावानां जीवादीनां तत्त्वानां विकल्पशो विस्तरेणाधिगमो भवति। तद्यथा १ निर्देशः। को जीवः। औपशमिकादिभावयुक्तो द्रव्यं जीवः। सम्यग्दर्शनपरीक्षायाम्। किं सम्यग्दर्शनम्। द्रव्यम्। सम्यग्दृष्टिजीवोऽरूपी नोस्कन्धो नोग्रामः। २ स्वामित्वम्। कस्य सम्यग्दर्शनमित्येतदात्मसंयोगेन परसंयोगेनोभयसंयोगेन चेति वाच्यम्। आत्मसंयोगेन जीवस्य सम्यग्दर्शनम्। परसंयोगेन जीवस्याजीवस्य जीवयोरजीवयोर्जीवानामजीवानामिति विकल्पाः। उभय

---

१ अ १ सू १० भाष्यम्।

२ 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इति गौ सू १-१-३

३ अ १ सू १४।

४ अरूपी—अविद्यमानं रूपमस्ति इत्यरूपी सवघनादिपु क्षेप नासौ रूपादिधर्मैः समन्वितः किन्त्वमूर्त आत्मेति।

५ पञ्चास्तिकाय-(५ १, ५-२) समुदितिः स्कन्धः। नोशब्दस्य तद्देशत्वान्नोस्कन्धः सम्यग्दृष्टिः। एवं नोग्रामोऽपि वक्तव्यः। स्कन्ध-अ ५ सू २५

६ यदा एकं साध्वादिकं जीवं प्रतीत्य सम्यक्त्वमुत्पद्यते तदा निमित्तापेक्षया जीवस्यैव। १ इह यस्य सम्यग्दर्शनमागतं स जीवो न विवक्षितः। २ एवं अर्हत्प्रतिमापेक्षयाऽजीवस्य। द्वयोः साध्वादीनामन्यतमजीवयोर्निमित्तयोरेवापेक्षयाजीवयोरिति भङ्गः। ३ एवं द्वयोरर्हत्प्रतिमयोः। ४ बहूनां साध्वादीनां निमित्तभूतानामपेक्षया जीवानामिति भङ्गः। ५ एवं बहूनामर्हत्प्रतिमानाम्। ६ सर्वेष्वपि एतेषु प्राप्तसम्यक्त्वो जीवो नापेक्ष्यते परसंयोगस्यैवाधिकारविवक्षणात्। उत्तरसंयोगे आत्मपरसंयोगचिन्ता कार्या।

संयोगेन जीवस्य नोजीवस्य जीवयोरजीवयोर्जीवानामजीवानामिति विकल्पा न सन्ति । शेषा सन्ति । ३ साधन । सम्यग्दर्शन केन भवति । निसर्गादधिगमाद्वा भवतीत्युक्तम् । तत्र निसर्ग. पूर्वोक्तः । अधिगमस्तु सम्यग्व्यायाम' । उभयमपि तदावरणीस्य कर्मण' क्षयेणोपशमेन क्षयोपशमाभ्यामिति । ४ अधिकरण त्रिविधमात्मसन्निधानेन परसन्निधानेनोभयसन्निधानेनेति वाच्यम् । आत्मसान्निधानमभ्यन्तरसन्निधानमित्यर्थ । परसन्निधान वाह्यसन्निधानमित्यर्थ । उभयसन्निधानं बाह्याभ्यन्तरसन्निधानमित्यर्थः । कस्मिन्सम्यग्दर्शनम् । आत्मसन्निधाने तावत् जीवे सम्यग्दर्शन, जीवे ज्ञानं, जीवे चारित्रमित्येतदादि । वाह्यसन्निधाने जीवे सम्यग्दर्शन नोजीवे सम्यग्दर्शनमिति यथोक्ता विकल्पा' । उभयसन्निधाने चाप्यभूता. सद्भूताश्च यथोक्ता भङ्गविकल्पा इति । ५ स्थितिः । सम्य-

---

तत्र १ जीवस्य २ अजीवस्य इत्येतौ भङ्गौ न स्त । एकाकिनो—ह्युभयसंयोगानौचित्यात् । अथान्ये भङ्गास्तु सम्भवन्त्विति न वाच्यम् । यस्माज्जीवयोरित्यत्र न हि सम्यक्त्वयुक्तस्य ग्रहण द्वयो कयोश्चिन्निमित्तभूतयोरेव ग्रह क्रियते तौ च परसंयोगविश्रुतावतस्त्याज्यो ३ जीवयोरिति तृतीयो भङ्ग । एवमजीवयोर्निमित्तभूतयो । जीवाना निमित्तभूताना, अजीवाना निमित्तभूतानामिति षडपि नादरणीया , आत्मसंयोग विना उभयसंयोगानुत्पत्ते' । अथ षडेव च भङ्गा शेषा आदरणीया' । ते त्विमे—१ जीवस्य जीवस्य २ जीवस्य अजीवस्य ३ जीवस्य जीवयो' ४ जीवस्य अजीवयो ५ जीवस्य जीवाना ६ जीवस्य अजीवाना इति ।

१ अ १ सू ३

२ अ १ सू ३ भाष्यम् ।

३ एतच्च प्राय' स्वामिद्वारवत् व्याख्येयम् तत्र 'यदात्मसंयोगेन' इत्याद्युक्त तत्स्थानेऽऽत्मसन्निधानेनेत्यादि वाच्यम् ।

ग्दर्शन कियन्त कालम् । सम्यग्दृष्टिर्द्विविधा । सादिः सपर्यवसाना, सादिरपर्यवसाना च । सादिमपर्यवसानमेव च सम्यग्दर्शनम् । तज्जघन्येनान्तर्मुहूर्त उत्कृष्टेन षट्षष्टिः सागरोपमानि साधिकानि । सम्यग्दृष्टि सादिरपर्यवसाना । सयोग शैलेशीप्राप्तश्च केवली सिद्धश्चेति । ६ विधान । हेतुत्रैविध्यात् क्षयादित्रिविधं सम्यग्दर्शनम् । तदावरणीयस्य कर्मणो दर्शनमोहस्य च क्षयादिभ्य । तद्यथा । क्षयसम्यग्दर्शन, उपशमसम्यग्दर्शनं, क्षयोपशमसम्यग्दर्शनमिति । अत्र चौपशमिकक्षायौपशमिकक्षायिकाणां परत परतो विशुद्धिप्रकर्ष ।७

किं चान्यत्—

---

१ एकाषायसद्द्रव्यवर्तिनी । अपरा तु अशुद्धदलिकरूपसद्द्रव्यापगमे क्षीणदर्शनमोहाना श्रेणिकादीनाम् । द्विविधापीय सादि सपर्यवसाना । उत्पत्तिकाले आदिमत्त्वात् । आद्याया मिथ्यात्वपुञ्जोदये द्वितीयायाश्च केवलज्ञानोत्पत्तौ मतिज्ञानतृतीयाशापायापगमेनापगमात् ।

२ जघन्येन-न्यूनन्यूनतया । ( ४-३१ )

३ मुहूर्तो घटिकाद्वयात्मक काल । तत्र प्रथमक्षणमारभ्यान्तिमक्षणपर्यन्तमन्त र्मुहूर्तमिति कथ्यते । क्षण एव जैनमते समयपदेनाभिधीयते ।

४ उत्कृष्टेन-अधिकाधिकतया । ( ४-३१ )

५ एतत्परिगणनमग्रे ४।१५ सूत्रे भाष्ये द्रष्टव्यम् ।

६ 'कायवाङ्मन कर्म योग ' ॥ ६।१ ॥ इति योगेन सहित

७ शैलेशी-शैलस्येव मेरोरिव अचलता स्थिरता अस्यामवस्थाया सा शैलेशी । अथवा शील समाधान तच्च निश्चयत सकलप्रामसमाधानरूपत्वात् सर्वसंवर । सततस्य सर्वसंवररूपस्य शीलस्येश शीलेश तस्येयमवस्था शैलेशीति ।

८ केवलज्ञानमस्यास्तीति केवली । केवलज्ञानलक्षणम्—सामग्रीविशेषत समुद्भूतसमस्तावरणक्षयापेक्ष निखिलद्रव्यपर्यायसाक्षात्कारिस्वरूप केवलज्ञानम् । प्र न लो परि २ सू २३

९ क्षयसम्यग्दर्शनम् १ उपशमसम्यग्दर्शनम् २ क्षयोपशमसम्यग्दर्शनमिति ३ । मत्याद्यावरणीय-( ८-७ ) दर्शनमोहसप्तकक्षयादुपजात क्षयसम्यग्दर्शनमभिधीयते । तेषामेवोपशमाज्जात उपशमसम्यग्दर्शनमुच्यते । तेषामेव क्षयोपशमाभ्या जात क्षयोपशमसम्यग्दर्शनमिति ।

चतुर्दशरज्ज्वात्मकलोकाकृति । पृ १२ ७२



॥ सत्संख्याक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वैश्च ॥ ८ ॥

१ सत्, २ संख्या, ३ क्षेत्र, ४ स्पर्शन, ५ कालः, ६ अन्तर, ७ भाव., ८ अल्पबहुत्वमित्येतैश्च सद्भूतपदप्ररूपणादिभिरष्टाभिरनुयोगद्वारैः सर्वभावानां विकल्पशो विस्तराधिगमो भवति । कथमिति चेदुच्यते । १ सत् सम्यग्दर्शनं किमस्ति नास्तीति । अस्तीत्युच्यते । क्वास्तीति चेदुच्यते । अजीवेषु तावन्नास्ति । जीवेषु तु भाज्यम् । तद्यथा । गतीन्द्रियकाययोगकषायवेदलेश्यासम्यक्त्वज्ञानदर्शनचारित्राहारोपयोगेषु त्रयोदशस्वनुयोगद्वारेषु यथासम्भवं सद्भूतप्ररूपणा कर्तव्या । २ संख्या । कियत्सम्यग्दर्शनं किं संख्येयमसंख्येयमनन्तमिति । उच्यते । असंख्येयानि सम्यग्दर्शनानि, सम्यग्दृष्टयस्त्वनन्ता. । ३ क्षेत्रम् । सम्यग्दर्शनं कियति क्षेत्रे । लोकस्यासंख्येय-

१ गतिनामकर्मोदयात् विवक्षितभवाद्भवान्तरगमनशीलत्वं गतेर्लक्षणम् ।

२ अङ्गोपाङ्गकर्मनिर्माणनामकर्मोदयाल्लभ्यानि त्वगादीनीन्द्रियाणि ।

३ पुद्गलघटितत्वे सत्यात्मनो निवासरूपत्वं कायस्य लक्षणम् ।

४ कषयन्ति शुद्धस्वभावं सन्तं धर्मं मलिनं कुर्वन्ति जीवमिति कषायाः ।

५ यदुदयात्पारतन्त्र्यादभिलाषो वाञ्छा भवति-जायते । ते त्रिविधाः १ स्त्रीवेद २ पुंवेद ३ नपुंसकवेदः । तत्र स्त्रियाः पुंस्यभिलाषः स्त्रीवेद, पुंसः स्त्रियामभिलाषः पुंवेद, उभयोरप्यभिलाषो नपुंसकवेद ।

६ लिश्यते श्लिष्यते कर्मणा सह आत्मा अनयेति लेश्या, अध्यवसाय । मनोयोगपरिणामजन्यत्वं लेश्याया लक्षणम् ।

७ तत्त्वार्थश्रद्धानम् ।

८ चतुर्दशरज्जुप्रमाणावगाढो लोको भवति । इह रज्जुर्द्विधा । औपचारिकी पारमार्थिकी च । तत्र लोकानां बुद्धिस्थैर्याय दृष्टान्तमात्रं प्रथमा सा च यथा-'जोयणलक्खपमाणं निमेसमित्तेण जाइ जो देवो । ता छम्मासे गमणं एवं रज्जु जिणा बिंति'। छाया—योजनलक्षप्रमाणं निमेषमात्रेण याति यो देवः । तत्षण्मासे गमनमेव रज्जुं भणन्ति । इति । द्वितीयरज्जुः संख्यातद्वीपसमुद्रयोजनप्रमाणं ।

' केचन्द्वीपनयोधनघन्तवर्तिनं स्वयम्भूरमणाभिधानसमुद्रे परतटवर्तिपूर्ववेदिकान्तदारभ्य यावत्तस्यैव तोयधेरपरवेदिकान्तं एतावत्प्रमाणा रज्जुरवगन्तव्या अधस्तादधोभागोऽधोमुखमल्लकसंस्थोऽधोलोकस्तदुपरि झल्लर्याकार उपरि च मृदङ्गाकृतिको

भागे। ४स्पर्शनम्। सम्यग्दर्शनेन किं स्पृष्टम्। लोकस्यासंख्येयभाग.। सम्यग्दृष्टिना तु सर्वलोक इति ॥

अत्राह–सम्यग्दृष्टिसम्यग्दर्शनयोः क' मतिविशेष इति। उच्यते। अपायसद्द्रव्यतया सम्यग्दर्शनमपाय आभिनिबोधिकम्। तद्योगात्सम्यग्दर्शनम्। तत्केवलिनो नास्ति। तस्मान्न केवली सम्यग्दर्शनी, सम्यग्दृष्टिस्तु भवति।

५ कालः। सम्यग्दर्शन कियन्तं कालमित्यत्रोच्यते। तदेकजीवेन नानाजीवैश्च परीक्ष्यम्। तद्यथा। एकजीवं प्रति जघन्येनान्तर्मुहूर्तं उत्कृष्टेन षट्षष्टिः सागरोपमानि साधिकानि। नानाजीवान् प्रति सर्वाद्धा। ६ अन्तरम्। सम्यग्दर्शनस्य को विरहकाल। एक

---

मल्लकयो शरावयोराकारमनुसरति लोक। अयमथ। प्रथम तावदेक शरावमधोमुखमवस्थाप्यते ततस्तस्योपरि द्वितीयमुपरिमुख तस्याप्युपरि तृतीयमधोमुखमित्येव व्यवस्थितशरावत्रयसदृशाकार सकलोऽपि लोको भवतीति। स च पञ्चास्तिकायमयो धर्माधर्माकाशजीवपुद्गललक्षणै पञ्चभिरस्तिकायैर्व्याप्त '।(प्रवचनसारोद्धारटीकाया सिद्धसेन सूरिशेखरकृतायां द्वार १४३ ।) अस्य सर्वस्य लोकस्य कल्पया भागाश्चतुर्दश। एवैकस्य विभागोऽयमेकरज्जुसमित ॥८॥ सर्वाधस्तनलोकान्तादारभ्योपरिग तलम्। यावत्सप्तमभेदिया एका रज्जुरिय भवेत् ॥ ९ ॥ प्रत्येकमेव सप्ताना भुवामुपरि वर्तिषु। तल्पेषु रज्जुरेकैका स्युरेव सप्त रज्जव ॥ १० ॥ रत्नप्रभोपरितलात् आरभ्यादिमताविषे। पर्यान्तेषु विमानेषु स्यादेषा रज्जुरष्टमी ॥११॥ तत आरभ्य नवमी महेन्द्रान्ते प्रकीर्तिता। अत पर तु दशमी लान्तकान्ते समाप्यते ॥ १२ ॥ भवेदेकादशी पूर्णा सहस्रारान्तसीमनि। स्याद् द्वादश्यच्युतस्यान्ते क्रमादेव त्रयोदशी ॥ १३ ॥ भवेद् ग्रैवेयकस्यान्ते लोकान्ते च चतुर्दशी। धर्मोर्ध्वभागादूर्ध्वाध सप्तसप्तेति रज्जव ॥ १४ ॥' उपाध्याय श्रीविनयविजयनीकृतलोकप्रकाशे १२ सर्गे ॥

१ एतल्लक्षणमग्रिमसूत्रे टिप्पन्या द्रष्टव्यम्।

२ सर्वाद्धा–सर्वकाल। अद्धा–समयादिकालभेद।

३ सम्यग्दर्शन प्राप्य पुनश्च्योत्वा पुनर्यावन्न सम्यग्दर्शनमासादयति स विरहकाल। सम्यग्दर्शनेन शून्य काल इत्यर्थ।

जीव प्रति जघन्येनान्तर्मुहूर्तं, उत्कृष्टेन उपार्धपुद्गलपरिवर्तः। नाना-जीवान् प्रति नास्त्यन्तरम् ॥

७ भाव । सम्यग्दर्शनमौपशमिकादीना भावाना कतमो भाव उच्यते । औदयिकपारिणामिकवर्जे त्रिषु भावेषु भवति । ८अल्पबहुत्वम् । अत्राह सम्यग्दर्शनाना त्रिषु भावेषु वर्तमानानां किं तुल्यसंख्यत्वमाहोस्विदल्पबहुत्वमस्तीति । उच्यते । सर्वस्तोकमौपशमिकम् । तत क्षायिकमसंख्येयगुणम् । ततोऽपि क्षायोपशमिकमसंख्येयगुणम् । सम्यग्दृष्टयस्त्वनन्तगुणा इति ॥ एव सर्वभावानां नामादिभिर्न्यास कृत्वा प्रमाणादिभिरधिगम कार्य. ॥ ८ ॥

उक्त सम्यग्दर्शनम् । ज्ञान वक्ष्याम. —

## ॥ मतिश्रुतावधिमन पर्यायकेवलानि ज्ञानम् ॥ ९ ॥

मतिज्ञान, श्रुतज्ञान, अवधिज्ञान, मन पर्यायज्ञान, केवलज्ञान

---

१ पचसवत्सरप्रमाण युगम् । असख्येययुगमान पल्योपमम् । पल्योपमदशकोटिकोटिभिश्च सागरोपमम् । दशसागरोपमकोटिकोट्यात्मिकोत्सर्पिणि एवमवसर्पिण्यपि अनन्ताभिरुत्सर्पिण्यवसर्पिणीभि पुद्गलपरावर्त तस्य अर्ध अर्धपुद्गलपरावर्त । तत्समीप मित्यर्थ ।

२ औपशमिकक्षायोपशमिकक्षायिकेषु ।

३ अर्थाभिमुखो नियत —प्रतिनियतस्वरूपो बोधो बोधविशेषोऽभिनिबोध , आभिनिबोध एवाभिनिबोधिक, अभिनिबोधशब्दस्य विनयादिपाठाभ्युपगमात् 'विनयादिभ्य' इत्यनेन स्वार्थे इकण् प्रत्यय । "अतिवर्तन्ते स्वार्थे प्रत्ययका प्रकृतिलिङ्गवचनानि" इति वचनादत्र नपुंसकता । यथा विनय एव वैनयिक मित्यत्र । अथवा अभिनिबुध्यते अनेनास्मादस्मिन् वेति अभिनिबोध — तदावरणकर्मक्षयोपशम तेन निर्वृत्तमाभिनिबोधिक आभिनिबोधिक च तद् ज्ञान च आभिनिबोधिकज्ञान—इन्द्रियमनोनिमित्तो योग्य देशावस्थितवस्तुविषय स्फुटप्रतिभासो बोध विशेष इत्यर्थ । २ तथा श्रवण श्रुत वाच्य वाचकभावपुरस्सरीकारेण शब्दसंसृष्टार्थग्रहणे हेतुरुपलब्धिविशेष , एवमाकार वस्तु जलधारणाद्यर्थक्रियासमर्थ घटशब्दवाच्यमित्यादिरूपतया प्रधानीकृतत्रिकालसाधारण समानपरिणाम शब्दार्थपर्यालोचनानुसारी इन्द्रियमनोनिमित्तोऽवगमविशेष इत्यर्थ । श्रुत च तद् ज्ञान च श्रुतज्ञानम् । ३ तथा अवशब्दोऽध शब्दार्थ , अव अधोऽधो विस्तृत वस्तु धीयते परिच्छिद्यतेऽनेनेत्यवधि , अथवा अवधिर्मर्यादा रूपिष्वेव द्रव्येषु परिच्छेद

क्तया प्रवृत्तिरूपा तदुपलक्षित ज्ञानमप्यवधि । यद्वा अवधानम्–आत्मनोऽर्थसाक्षात्करण व्यापारोऽवधि । अवधिश्चासौ ज्ञान चावधिज्ञानम् । ४ तथा परि सर्वतो भावे अवन अव "तुदादिभ्यो न कौ" इत्यधिकारे "अकर्तौ च" इत्यनेनौणादिकोऽकार प्रत्यय, अवन गमन वेदनमिति पर्याया । परि अव पयय मनसि मनसो वा पर्यव मन पर्यव सर्वतो मनोद्रव्यपरिच्छेद इत्यर्थ । अथवा मन पर्यय इति पाठ । तत्र पर्ययण पर्यय । भावेऽल्प्रत्यय । मनसि मनसो वा पर्ययो मन पर्यय । सर्वतस्तत्परिच्छेद इत्यर्थ । स चासौ ज्ञान च मन पर्ययज्ञानम् । अथवा मन पर्यायज्ञानमिति पाठ । तत्र मनासि मनोद्रव्याणि पर्य ति सर्वात्मना परिच्छिनत्ति मन पर्याय "कर्मणोऽण्" इति अण्प्रत्यय । मन पर्याय च तज्ज्ञान च मन पर्यायज्ञानम् । यद्वा मनस पर्याया मन पर्याया, पर्याया भेदा धर्मा बाह्यवस्त्वालोचनप्रकारा इत्यर्थ । तेषु तेषा वा सनधि ज्ञान मन पर्यायज्ञानम् । ५ तथा केवल एकमसहाय मत्यादिज्ञाननिरपेक्षत्वात् केवलज्ञानप्रादुर्भावे मत्यादीनामसम्भवात् । ननु कथमसम्भवो यावता मतिज्ञानादीनि स्वस्वावरणक्षयोपशमेऽपि प्रादुष्यन्ति । ततो निर्मूलस्वस्वावरणविलये तानि सुतरा भविष्यन्ति, चारित्रपरिणामवत् । उक्त च "आवरणदेसविगमे जाइ वि जायन्ति मइसुयाईणि । आवरणसव्वविगमे कह ताइ न होंति जीवस्स ॥ १ ॥ ( छाया–आवरणदेशविगमे यान्यपि जायन्ते मतिश्रुतादीनि । सर्वावरणविगमे कथ तानि न भवन्ति जीवस्य ॥ १ ॥ ) उच्यते इह यथा जात्यस्य मरकतादिमणेर्मलोपदिग्धस्य यावन्नाद्यापि समूलमलापगमस्तावद्यथा यथा देशतो मलविलय तथा तथा देशतोऽभिव्यक्तिरुपजायते, सा च क्वचित्कदाचित्कथचित् भवतीत्यनेकप्रकारा, तथात्मनोऽपि सकलकालकलापावलम्बिनिखिलपदार्थपरिच्छेदकरणैकपारमार्थिकस्वरूपस्याप्यावरणमलपटलतिरोहितस्वरूपस्य यावत् नाद्यापि निखिलकर्ममलापगम तावद्यथा यथा देशत कर्ममलोच्छेदस्तथा तथा देशत तस्य विज्ञप्तिरुज्जृम्भते सा च क्वचित्कदाचित्कथचिदित्यनेकप्रकारा । उक्त च "मलविद्धमणेर्व्यक्तिर्यथानेकप्रकारत । कर्मविद्धात्मविज्ञप्तिस्तथाऽनेकप्रकारत ॥१॥" सा चानेकप्रकारता मतिश्रुतादिभेदेनावसेया, ततो यथा मरकतादिमणेरशेषमलापगमसम्भवे समस्तास्पष्टदेशव्यक्तिव्यवच्छेदेन परिस्फुटरूपैकाभिव्यक्तिरुपजायते तद्वदात्मनोऽपि ज्ञानदर्शन–( दर्शन–दृश्यन्ते श्रद्धीयन्ते ज्ञायन्ते वा जीवादय पदार्था अनेनास्मादस्मिन्वेति ) चारित्र–(चारित्र–श्रामण्यम् ) प्रभावतो नि शेषावरणप्रहाणादशेषज्ञानव्यवच्छेदेनैकरूपा अतिस्फुटा सर्ववस्तुपर्यायसाक्षात्कारिणी विज्ञप्तिरुल्लसति । तथा चोक्तम् "यथा जात्यस्य रत्नस्य नि शेषमलहानित । स्फुटैकरूपाभिव्यक्तिर्विज्ञप्तिस्तद्वदात्मन ॥ १ ॥" ततो मत्यादिनिरपेक्ष केवलज्ञान अथवा शुद्ध केवल तदावरणमलकलङ्कस्य नि शेषतोऽपगमात्, सकल वा केवल प्रथमत एवाशेषतदावरणापगमत सम्पूर्णोत्पत्ते, असाधारण वा केवलमनन्यसदृशत्वात् । अनन्त वा केवल ज्ञेयानन्तत्वात् केवल च तज्ज्ञान च केवलज्ञानम् ॥

मित्येतन्मूलविधानत.। पञ्चविध ज्ञानम्। प्रभेदास्तवस्य पुरस्ताद्वक्ष्यन्ते ॥ ९ ॥

॥ तत्प्रमाणे ॥ १० ॥

तदेतत्पञ्चविधमपि ज्ञान द्वे प्रमाणे भवत. परोक्ष प्रत्यक्ष च ॥१०॥

॥ आद्ये परोक्षम् ॥ ११ ॥

आदौ भवमाद्यम्। आद्ये सूत्रक्रमप्रामाण्यात् प्रथमद्वितीये शास्ति। तदेवमाद्ये मतिज्ञानश्रुतज्ञाने परोक्ष प्रमाणं भवत । कुतः। निमित्तापेक्षत्वात्। अपायसद्द्रव्यतया मतिज्ञानम्। 'तदिन्द्रियानिन्द्रियनिमित्तम्' इति वक्ष्यते ॥ तत्पूर्वकत्वात्परोपदेशजत्वाच्च श्रुतज्ञानम् ॥ ११ ॥

॥ प्रत्यक्षमन्यत् ॥ १२ ॥

मतिश्रुताभ्या यदन्यत् त्रिविध ज्ञान तत्प्रत्यक्ष प्रमाण भवति। कुत.। अतीन्द्रियत्वात्। प्रमीयन्तेऽर्थास्तैरिति प्रामाणानि। अत्राह। इह अवधारित द्वे एव प्रमाणे प्रत्यक्षपरोक्षे इति। अनुमानोपमानागमार्थापत्तिसम्भवाभावानपि च प्रमाणानीति केचिन्मन्यन्ते। तत्क-

---

१ अ १ सू १५,२०,२१,२४, अ १० सू १

२ अस्मन्मुद्रापितप्रमाणमीमासायाम् १–१–१०

३ धर्मित्वेनोपात्त यन्मतिज्ञान तदपायो निश्चय सद्द्रव्याणि शुद्धदलिकानि स घया सद्भावेन सद्द्रव्यानुगतोऽपायो धर्मित्वेनोपात्त इत्यर्थ।

४ अ १ सू १४

५ 'चार्वाकोऽध्यक्षमेक सुगतकणभुजौ सानुमान सशाब्द। तद्वैत पारमर्ष सहित मुपमया तत् त्रय चाक्षपाद ॥ अर्थापत्त्या प्रभाकृत् वदति स निखिल मन्यते भट्ट एतत्। साभाव द्वे प्रमाणे जिनपतिसमये स्पष्टतोऽस्पष्टतश्च ॥१॥' अत्र सम्भवैतिह्यादिक प्रमाण मधिकमिति पौराणिका।

धर्मेतादिति । अत्रोच्यते । सर्वाण्येतानि मतिश्रुतयोरन्तर्भूतानीन्द्रियार्थसन्निकर्षनिमित्तत्वात् । किं चान्यत् । अप्रामाणान्येव वा । कुतः । मिथ्यादर्शनपरिग्रहाद्विपरीतोपदेशाच्च । मिथ्यादृष्टेर्हि मतिश्रुतावधयो नियतमज्ञानमेवेति वक्ष्यते । नयवादान्तरेण तु यथा मति श्रुतविकल्पजानि भवन्ति तथा परस्ताद्वक्ष्यामः ॥ १२ ॥

मति स्मृति[1] सज्ञा चिन्ताभिनिबोध इत्यनर्थान्तरम् ।१३।

मतिज्ञान, स्मृतिज्ञान, सज्ञाज्ञान, चिन्ताज्ञान, तथा आभिनिबोधिकज्ञानमित्यनर्थान्तरम् ॥ १३ ॥

॥ तदिन्द्रियानिन्द्रियनिमित्तम् ॥ १४ ॥

तदेतन्मतिज्ञान द्विविध भवति । इन्द्रियनिमित्तमनिन्द्रियनिमित्त च । तत्रेन्द्रियनिमित्त स्पर्शनादीना पञ्चाना स्पर्शादिपु पञ्चस्वेव स्वविपयेपु । अनिन्द्रियनिमित्त मनोवृत्तिरोघज्ञान च ॥ १४ ॥

॥ अवग्रहेहापा(वा)यधारणा ॥ १५ ॥

तदेतन्मतिज्ञानमुभयनिमित्तमप्येकशश्चतुर्विध भवति। तद्यथा। १ अवग्रह २ ईहा ३ अपायः ४ धारणा चेति।

तत्राव्यक्त यथास्वमिन्द्रियैर्विपयाणामालोचनावधारणमवग्रह[2] । अवग्रहो ग्रहणमालोचनमवधारणमित्यनर्थान्तरम् ॥ अवगृहीते विपयार्थैकदेशाच्छेपानुगमन निश्चयविशेपजिज्ञासा ईहा । ईहा ऊहा तर्क परीक्षा विचारणा जिज्ञासेत्यनर्थान्तरम् ॥ अवगृहीते विपये सम्यगसम्यगिति गुणदोपविचारणाध्यवसायापनोदोऽपाय[3] ।

---

१ अ १ सू १२

२ अ १ सू, ३५ भाष्ये ।

३ अ २ सू २०

४ अस्मन्मुद्रापितप्रमाणमीमांसायाम् १ १ २७,२८,२९,३० ।

अपायोऽपगमः अपनोद. अपव्याध' अपेतमपगतमपविद्धमपनुत्तमि त्यनर्थान्तरम् ॥ धारणा प्रतिपत्तिर्यथास्व मत्यवस्थानमवधारण च । धारणा प्रतिपत्तिरवधारणमवस्थान निश्चयोऽवगम, अवबोध इत्य नर्थान्तरम् ॥ १५ ॥

॥ बहुबहुविधक्षिप्रानिश्रितानुक्तध्रुवाणा सेतराणाम् ॥१६॥

अवग्रहादयश्चत्वारो मतिज्ञानविभागा एषां बह्वादीनामर्थानां सेतराणा भवन्त्येकश. । सेतराणामिति सप्रतिपक्षाणामित्यर्थः । बह्ववगृह्णाति अल्पमवगृह्णाति बहुविधमवगृह्णाति एकविधमवगृह्णा- नि । क्षिप्रमवगृह्णाति चिरेणावगृह्णाति । अनिश्रितमवगृह्णाति निश्रि- तमवगृह्णाति । अनुक्तमवगृह्णाति उक्तमवगृह्णाति । ध्रुवमवगृह्णा ति अध्रुवमवगृह्णाति । इत्येवमीहादीनामपि विद्यात् ॥ १६ ॥

---

१अवग्रहादय मागत्र निरूपितस्वरूपा (१ १५) मूलभेदतश्चत्वार इति ख्यापो यशमवैचित्र्यात्तु नानाभेदास्त एव भवन्तीति मत्वा चत्वार इत्याह । मतिज्ञानस्य च महत्त्वात् तद्भेदा एत इति मतिज्ञानविभागा इत्याह ( अवग्रहादय ए ) तेऽवग्रहा दय, एषां सूत्रोपन्यस्ताना बह्वादीना षण्णाम् अर्थानाम् अयमाणानामित्यर्थ बह्वादीना षण्णामर्थाना सेतराणाञ्च तेऽवग्रहादयो ग्राहका इत्यर्थ इत्याह सेतराणां भवन्तीति । एकश इति च एकैकस्य बह्वादेरर्थकलापस्य सेतरस्य ग्राहका इति एकैकोऽवग्रहादिरेकश, सेतर इत्यस्य चार्थो नैवं ग्राह्य बह्वोरपरस्य ( ग्राह्य इतर इति, शक्य वक्तुमेव बह्वादीनामनिश्रितादिरितर इति एतन्निरासायाह सेतराणां, सप्रतिपक्षा- णामित्यर्थ । एतत्कथयति इतरशब्दस्य विरोधी योऽर्थ स वाच्यो भवति बह्वर्थस्य च स्तोकार्थो विरोधी प्रतिपक्ष इत्येव शेषाणा प्रतिपक्षता ज्ञेया एव सम्बन्ध लगयित्वाऽर्थं कथयति—

बह्ववगृह्णाति अल्पमवगृह्णाति बहुविधमवगृह्णाति एक- विधमवगृह्णाति

बह्ववगृह्णाति इत्यादिना, ननु चावग्रहादय प्रथमान्ता श्रुता पूर्वसूत्रे, (१–१५) बह्वादयश्चैव षष्ठ्यन्ता इति तत्रैवमपकथने युक्त षष्ठोरपरस्याश्रमद' यस्त

स्यार्थस्यावग्रह इति, उच्यते, नायं दोषः, यतोऽवग्रहादयः कर्तृसाधनाः तत्र कृता थवगृह्णातीत्यवग्रहः ईहत इति ईहा अपैतीत्यपायः धारयतीति धारणा, यश्चासौ शब्दादोऽवगृह्णातीत्यादिरूपस्तस्यावश्यं क्रमणा भावितव्यम्, स्पष्ट बह्वादिभेद सूत्रेण विषयात्मकं भण्यते अतो नास्त्ययमदो यहोऽवग्रह बहुमवगृह्णातीति अनयो एक एवार्थः, केवलन्तु शब्दभेद उच्यते । स्पर्शनानग्रहस्तावदेष बहुमवगृह्णाति शय्यायामुप विशन् पुमान् तत्स्थयोषित्पुष्पवस्त्रचन्दनादिस्पर्शं बहु सन्तमर्थं भेदेनावबुध्यते अयं योषित्स्पर्शोऽयं च तद्गतपुष्पस्पर्शोऽयं च तद्गतानुलेपनचन्दनस्पर्शोऽयं चैतत्परिहितवस्त्र स्पर्श अयमेतदाबद्धरसनास्पर्श इति अतो बहुलस्पर्शं भिन्नजातीयमवगृह्णातीति । ननु चावग्रह एक सामयिक शास्त्रे निरूपितो न चैकस्मिन् समये चैकैकावग्रह एवंविधो युक्तोऽल्पकालत्वादिति, उच्यते सत्यमेवमेतत्, किन्तु अवग्रहो द्विधा नैश्चयिको व्याव हारिकश्च तत्र नैश्चयिको नाम सामान्यपरिच्छेद स चैक सामयिक शास्त्रेऽभिहितः सतो नैश्चयिकादनन्तरमीहैवमात्मिका प्रवर्तते किमयं स्पर्श उतास्पर्श इति तस्याश्चानन्तरोऽ- पाय स्पर्शोऽयमिति अयं चापाय अवग्रह इत्युपचर्यते आगामिनो भेदानङ्गीकृत्य यस्मा देतेन सामान्यमवच्छिद्यते । यत पुनरेतस्मादीहा प्रवर्तिष्यते कस्याय स्पर्श पुनश्चापायो भविष्यत्यस्यायमिति अयमपि चापाय पुनरवग्रह इत्युपचर्यते, अतोऽनन्तरवर्तिनीमीहा मपाय चाश्रित्य एव यावदस्यान्ते निश्चय उपजातो भवति यत्रापरं विशेषं न काङ्क्षती त्यर्थ अपाय एव भवति न तत्रोपचार इति । अतो य एष औपचारिकोऽवग्रहस्त मङ्गीकृत्य बहु अवगृह्णातीत्येतदुच्यते नत्वेकसमयवर्तिनं नैश्चयिकमिति, एवं बहुविधा दिषु सर्वत्रौपचारिकाश्रयणाद्व्याख्येयमिति । सम्प्रति बहुत्वस्य प्रतिपक्षं कथयति-- **अल्पमवगृह्णातीत्यनेन,** यदा तेषामेव योषिदादिस्पर्शानां य किञ्चिदेकं स्पर्श मवगृह्णात्यन्यान् सतोऽपि क्षयोपशमापकर्षेण गृह्णाति तदाल्पमेकमवगृह्णातीत्युच्यते । बहुविधमवगृह्णातीति, बह्व्यो विधा यस्य स बहुविधस्तमवगृह्णाति, बहुविधो नाम स एव योषिदादिस्पर्श एकैकः शीतस्निग्धमृदुकठिनादिरूपो यदाऽवगृह्यते तदा बहुविध गुणैर्भिन्नं स्पर्शं परिच्छिन्दत् तज्ज्ञानं बहुविधमवगृह्णातीत्युच्यते, यदा तु योषिदादि स्पर्शमेकगुणसमन्वितं शीतोऽयमिति वा स्निग्धोऽयमिति वा मृदुरयमिति वेत्येवमव च्छिनत्ति तदा एकविधमवगृह्णातीत्युच्यते ।

**क्षिप्रमवगृह्णाति । चिरेणावगृह्णाति । निश्रितमवगृह्णाति । अनिश्रितमवगृह्णाति । असन्दिग्धमवगृह्णाति सन्दिग्धमवगृह्णाति**

**ध्रुवमवगृह्णाति । अध्रुवमवगृह्णाति इत्येवमीहादीनामपि विद्यात् ॥ १६ ॥**

तमेव भूयो योषिदादिस्पर्शमाशु स्वेनात्मना यदाऽवच्छिनत्ति **तदा क्षिप्रमवगृह्णातीति** भण्यते, यदा तु तमेव योषिदादिस्पर्शं स्वेनात्मनाऽवच्छिनत्ति बहुना कालेन तदा चिरेणावगृह्णातीत्युच्यते । **चिरेणेति** बहुना कालेन **अनिश्रितमवगृह्णातीति** निश्रितं लिङ्गमिति तोऽभिधीयते, यथा यूथिकाकुसुमानामत्यन्तशीतमृदुस्निग्धादिरूपं प्राक् स्पर्शोऽनुभूतस्तेनानुमानेन लिङ्गेन तं विषयं न यदा परिच्छिन्दत् तज्ज्ञानं प्रवर्तते तदा अनिश्रितं अलिङ्गमवगृह्णातीत्युच्यते, यदा त्वेतस्मादेवानुमानालिङ्गात्परिच्छिनत्ति निश्रितं, तदा सलिङ्गमवगृह्णातीति भण्यते । उक्तमवगृह्णातीत्यसन्तु विकल्प श्रोत्रावग्रहविषय एव न सर्वव्यापीति, यत उक्तमुच्यते शब्दः स वाच्यक्षरात्मकस्तमवगृह्णातीति । अनुक्तस्तु तदन्यो " नाभिप्रयुक्तमन्यसदृशाधिकरणे तथाह्यय " ( परिभाषेन्दुशेखरे प ७४ ) इति अनया कल्पनया शब्द एव नक्षरात्मकोऽभिधीयते तमवगृह्णाति अनुक्तमवगृह्णातीति भण्यते । अव्याप्तिदोषभीत्या चापरेरिमं विकल्पं प्रोज्झ्य अयं विकल्प उपन्यस्तो निश्चितमवगृह्णातीति निश्चितं सकलसंशयादिदोषरहितमिति यथा तमेव योषिदादिस्पर्शमवगृह्णत् ज्ञानं योषित एव पुष्पाणामेव चन्दनस्यैवेत्येवं यदा प्रवर्तते तदा निश्चितमवगृह्णातीत्युपदिश्यते । अनिश्चितमवगृह्णातीति च कदा व्यपदिश्यते यदा तमेव स्पर्शं संशय्य परिच्छिनत्ति स्पर्शोऽयं भवत्येवन्तु न निश्चिनोति योषित एवायं विलोमधर्मादेरपीदृशो भवति योषिदादिना तदा तदा तमयमवच्छिनत्तीत्यर्थः । एतदुक्तं भवति सति चोपयोगे यदासौ विषयः स्पर्शाख्यः स्पृष्टो भवति तदा तमवगृह्णाति, एवम् **अध्रुवमवगृह्णातीति** सतीन्द्रिये सति चोपयोगे सति च विषयसम्बन्धे कदाचित्तं विषयं तथा परिच्छिनत्ति कदाचिन्नेत्यतदध्रुवमवगृह्णातीत्युपदिश्यते । एवमित्यनेनैतत् कथयति—यथा विषयस्य बह्वादेर्भेदात् द्वादशप्रकारोऽवग्रहोऽभिहितः क्षयोपशमोत्कर्षापकर्षादेवम् **ईहादीनामपि** ईहापायधारणानामपि जानीयात् बह्वीहते अल्पमीहते बहुविधमीहते एकविधमीहते क्षिप्रमीहते चिरेणेहते अनिश्रितमीहते निश्रितमीहते उक्तमीहते अनुक्तमीहते । द्वितीयविकल्पे निश्चितमीहते सन्दिग्धमीहते ध्रुवमीहते अध्रुवमीहते । एवमपायेऽपि बह्ववैतीत्यादयो द्वादशविकल्पा धारणायां च बहु धारयतीत्यादयो द्वादशैव, एवमवग्रहादीनां स्वस्थाने द्वादशविधम् ॥ १६ ॥

॥ अर्थस्य ॥ १७ ॥

अवग्रहादयो मतिज्ञानविकल्पा अर्थस्य भवन्ति ॥ १७ ॥

॥ व्यञ्जनस्यावग्रहः ॥ १८ ॥

व्यञ्जनस्यावग्रह एव भवति नेहादयः । एवं द्विविधोऽवग्रहो व्यञ्जनस्यार्थस्य च । ईहादयस्त्वर्थस्यैव ॥ १८ ॥

॥ न चक्षुरनिन्द्रियाभ्याम् ॥ १९ ॥

चक्षुषा नोइन्द्रियेण च व्यञ्जनावग्रहो न भवति । चतुर्भिरिन्द्रियैः शेषैर्भवतीत्यर्थः । एवमेतन्मतिज्ञानं द्विविधं चतुर्विधं अष्टाविंशतिविधं अष्टषष्ठ्युत्तरशतविधं षट्त्रिंशत्त्रिशतविधं च भवति॥१९॥

---

१ अथ स्पर्शरसगन्धवर्णशब्दात्मकस्तस्य स्पर्शादेरर्थस्यावग्रहादयोऽवच्छेदका मतिज्ञानविकल्पा –मतिज्ञानस्येन्द्रियादिभेदनाविभक्तस्य विकल्पा अंशा इत्यर्थः ।

२ व्यज्यते प्रकटीक्रियतेऽर्थो येन दीपेनेव घट, तद् व्यञ्जनम् । तथा–व्यञ्जनमुपकरणेन्द्रियस्पर्शाद्याकारपरिणतद्रव्यसंघातस्तस्यावग्रह एवैको भवति ।

३ नोइन्द्रियम्–मन ।

४ चक्षुषा नोइन्द्रियेण च मन ओघज्ञानरूपेण च सहैव रूपाकारपरिणता पुद्गलाश्चिन्त्यमानाश्च वस्तुविशेषा संश्लेषं न यान्ति अतो व्यञ्जनं चक्षुरुपकरणेन्द्रियनोइन्द्रिययोन भवति ।

५ द्विविध इन्द्रियानिन्द्रियनिमित्तभेदात् । चतुर्विधमवग्रहेहापायधारणाभेदत । अष्टाविंशतिविधं स्पर्शनादीनां मनोऽन्तानां ( स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि मनश्च ) षण्णां प्रत्येकमर्थावग्रहादिभिश्चतुर्भिश्चतुर्विंशतौ भेदेषु नयनमनोवर्जानां चतुर्णां व्यञ्जनावग्रहरूपभेदचतुष्टयक्षेपात् । अष्टषष्ठ्युत्तरशतविध–तस्या एवाष्टाविंशतेरेकैकभेदस्य बह्वादिभेदेन षोढाभवनात् । षट्त्रिंशत्त्रिशतविध–तस्या एवाष्टाविंशतेर्बह्वादिभिः सेतरैर्द्वादशधाभवनात् ।

॥ श्रुत मतिपूर्वं द्व्यनेकद्वादशभेदम् ॥ २० ॥

श्रुतज्ञान मतिज्ञानपूर्वक भवति । श्रुतमाप्तवचनमागम. उपदेश ऐतिह्यमाम्नाय प्रवचन जिनवचनमित्यनर्थान्तरम् । तद्द्विविधमङ्गबाह्य मङ्गप्रविष्ट च । तत्पुनरनेकविध द्वादशविध च यथासङ्ख्यम् । अङ्गबाह्यमनेकविधम् । तद्यथा । सामायिक चतुर्विंशतिस्तवो वन्दन प्रतिक्रमण

१ तीर्थकरोपदिष्टत्वे सति गुद्धपतिदयवङ्गणधैरत्वधारित्वमत्व ? तस्य लक्षणम ।

२ प्रकर्षेणन मादिभिनयप्रमाणनिर्देशादिभिश्च जीवादयोऽर्था उच्यन्तेऽनेन तत्प्रवचनम् ।

३ अगानि आचारादीनि ( एषा वर्णनमस्म मुद्रापयिष्यमाणस्याद्वादमञ्जर्या पृ १७६ टि २ द्रष्टव्यम् । तेभ्यो बाह्या अगबाह्या भिन्ना अनङ्गप्रविष्टा -(१) चन्द्र प्रज्ञप्ति ( २ ) सूर्यप्रज्ञप्ति ( ३ ) जम्बूद्वीपप्रज्ञप्ति ( ४ ) द्वीपसागरप्रज्ञप्ति । ( स्था ४ ठा सू २७७ ) इत्यादय अनेकविधा ।

४ इह पुरुषस्य द्वादश अगानि तद्यथा– द्वौ पादौ द्वे जङ्घे द्वे ऊरुणी द्वे गात्रार्धे द्वौ बाहू ग्रीवा शिरश्च । एव श्रुतरूपस्यापि परमपुरुषस्याचारादीनि द्वादशागानि ( १ आचाराग २ सूत्रकृताग ३ स्थानाग ४ समवायाग ५ भगवती (विवाहप्रज्ञप्ति ) ६ ज्ञाताधर्मकथाङ्ग ७ उपासकदशाङ्ग ८ अतकृद्दशाग ९ अनुत्तरोपपातिकदशाग १० प्रश्नव्याकरण ११ विपाक १२ दृष्टिवाद ) क्रमण वेदितव्यानि । श्रुतपुरुषस्याङ्गेषु प्रविष्टमङ्गप्रविष्टम् । अङ्गभावेन व्यवस्थिता श्रुत भेदा गणधरा गौतमस्वाम्यादय मूलभूतमाचारादिक सूत्रमुपरचयन्ति तेषामेव सर्वोत्कृष्ट श्रुतलब्धिसम्पन्नतया तद्रचयितुमीशत्वात् तेषाणा ततस्तत्कृत सूत्र मूलभूतमित्यगप्रविष्ट मुच्यते । यत्पुन शेषै श्रुतस्थविरै भद्रबाहुस्वाम्यादिभि तदेकदेशमुपजीव्य विरचित तदनङ्गप्रविष्टम् स्थविरास्तु भद्रबाहुस्वाम्यादयस्तद्दृष्ट श्रुतमावश्यकनियुक्त्यादिकमनङ्गप्रविष्टमङ्गबाह्यमुच्यते ।

५ समभावो यत्राध्ययने वर्ण्यते ।

६ चतुर्विंशतीना पूरणस्यात्युपकारिणो यत्र स्तव शेषाणा च तीर्थकृता स चतुर्विंशतिस्तव ।

७ वन्दन–गुणवतः प्रणामो यत्र वर्ण्यते तद्वन्दनम् ।

८ असयमस्थान प्राप्तस्य यतेस्तस्मात् प्रतिनिवर्तन यत्र वर्ण्यते । अ १ सू २२

कायव्युत्सर्गः प्रत्याख्यानं दशवैकालिकं उत्तराध्यायाः दशाः कल्प-व्यवहारौ निशीथमृषिभाषितान्येवमादि ॥ अङ्गप्रविष्टं द्वादशविधम् । तद्यथा । आचारः सूत्रकृतं स्थानं समवायः व्याख्याप्रज्ञप्तिः ज्ञात-धर्मकथा उपासकाध्ययनदशाः अन्तकृद्दशाः अनुत्तरौपपातिक-दशाः प्रश्नव्याकरणं विपाकसूत्रं दृष्टिपात इति ।

अत्राह । मतिज्ञानश्रुतज्ञानयोः कः प्रतिविशेष इति । अत्रो च्यते । उत्पन्नविनष्टार्थग्राहकं साम्प्रतकालविषयं मतिज्ञानम् । श्रुत-ज्ञानं तु त्रिकालविषयं उत्पन्नविनष्टानुत्पन्नार्थग्राहकम् ॥

---

१ कृतस्य पापस्य यत्र स्थानमौनध्यानरूपकायत्यागेन विशुद्धिराख्यायते स कायव्युत्सर्गः ।

२ स्वेच्छाप्रवृत्तिप्रतिकूलतया मर्यादया विवक्षितकालादिमानया आख्यानं प्रकथनं प्रत्याख्यानम् निवृत्तिद्वारेण प्रतिज्ञाकरणं । एते सामायिकादिभिरध्ययनैरावश्यकश्रुतस्कन्ध उक्तः ।

३ विकालनापराह्णलक्षणेन निर्वृत्तं वैकालिकं दशाध्ययननिर्माणं च तद्वैकालिकं च मध्यपदलोपाद्दशवैकालिकम् । शय्यम्भवसूरिकृतं स्वनामख्यातं श्रुतग्रन्थः ।

४ आचारात्परतः पूर्वकाले यस्मादेतानि पठितवन्तो यतयस्तेनोत्तराध्ययनानि ।

५ पूर्वेभ्य आनीय संघस्तिहिताय स्थापितान्यध्ययनानि दशा उच्यन्ते, दशा इति व्यवस्थावचनः शब्दः कान्चित्सातिविशिष्टावस्था यतीनां यासु वर्ण्यते ता दशा इति ।

६ आभवत्प्रायश्चित्तदानप्रायश्चित्तयोः कल्पनाच्छेदनाद्व्यवहरणाद्दानाच्च कल्पव्यवहारौ ।

७ उभयविषयप्रायश्चित्तज्ञापकतायाः उभयत्र पर्याप्तत्वाद् द्वित्वविश्रान्तपदाभि-धानं निशीथप्रकाशं सूत्राभ्याम् ।

८ ऋषिभाषितानि–प्रत्येकबुद्धादिभणितानि ( प्रत्येकबुद्धा –प्रतीत्यैकं किञ्चिद्वृषभादिकमनित्यतादिभावनाकारणं वस्तु बुद्धा बुद्ध्यन्ते परमार्थमिति ) कापिलीयादीनि ।

९ वर्तमानभूतभविष्यत्कालविषयम् ।

अत्राह । गृह्णीमो मतिश्रुतयोर्नानात्वम् । अथ श्रुतज्ञानस्य द्विविधमनेकद्वादशविधमिति किंकृतः[1] प्रतिविशेष इति । अत्रोच्यते । वक्तृविशेषाद्द्वैविध्यम् । यद्भगवद्भिः सर्वज्ञैः सर्वदर्शिभिः परमर्षिभिरर्हद्भिस्तत्स्वाभाव्यात्परमशुभस्य च प्रवचनप्रतिष्ठापनफलस्य तीर्थकरनामकर्मणोऽनुभावादुक्तं भगवच्छिष्यैरतिशयवद्भिरुत्तमातिशयवाग्बुद्धिसंपन्नै[2]र्गणधरै[3]र्दृब्धं[4] तदङ्गप्रविष्टम् । गणधरानन्तर्यादिभिस्त्वत्यन्तविशुद्धागमैः परमप्रकृष्टवाङ्मतिशक्तिभिराचार्यैः काल[5]संहनना[6]युर्दोषा[7]दल्पशक्तीनां शिष्याणामनुग्रहाय यत्प्रोक्तं तदङ्गबाह्यमिति । सर्वज्ञप्रणीतत्वादानन्त्याच्च ज्ञेयस्य श्रुतज्ञानं मतिज्ञानान्महाविषयम्[8] । तस्य च महाविषयत्वात्तांस्तानर्थानधिकृत्य प्रकरणसमाप्त्यपेक्षमङ्गोपाङ्ग[9]नानात्वम् । किं चान्यत् । सुखग्रहणधारणविज्ञानापोहप्रयोगार्थं

---

१ किंकृत—केन कृत ।

२ अ ६ सू १२

३ आप्तागमानन्तरागमपरम्परागमभेदात्त्रिविध आगमः । आप्तागमो मूलपुरुषप्रणीत उच्यते अनन्तरागमस्तु द्वितीयपुरुषप्रणीत उच्यते अर्हतां द्वितीयपुरुषा गणधरा एव भवन्ति । परम्परापरिपाटीत्यर्थः । सा च तृतीयपुरुषादिषु ज्ञेया यथा गणधराणां द्वितीयपुरुषा गणधरशिष्याः स्युः अर्हतां त्वेते परम्परागोचरास्तृतीयपुरुषा इत्यर्थः ।

४ दृब्ध—कथितम् ।

५ कालदोषात्—कालस्य दुःषमाभिधस्य स्वभावात्पुरुषा अल्पशक्तयो भवन्ति ।

६ यन्निमित्तवज्रर्षभनाराचादिभेदभिन्नास्थिसञ्चयनरूपविशेषो भवति तद्रूपत्वं संहननस्य लक्षणम् ।

७ आयुर्जीवितं तदल्पम् । न सर्वचिरं जीवेन्न वर्षशतमिति ।

८ महाविषय—अनेकार्थपरिच्छेदि ।

९ तीर्थकरादिनामकर्मोदयवर्तितीर्थकरादिना प्रोक्तरूपत्वं, अङ्गाख्यश्रुतस्य लक्षणम् । तदङ्गार्थानुवादित्वमुपाङ्गस्य लक्षणम् उपाङ्गानि द्वादश । राजप्रश्नीयादीनि ।

च। अन्यथा ह्यनिबद्धमङ्गोपाङ्गश' समुद्रप्रतरणवद्दुरध्यवसेयं स्यात्। एतेन पूर्वाणि वस्तूनि प्राभृतानि प्राभृतप्राभृतानि अध्ययनान्युद्देशाश्च व्याख्याता.।

अत्राह। मतिश्रुतयोस्तुल्यविषयत्वं वक्ष्यति। द्रव्येष्वसर्वपर्यायेष्विति। तस्मादेकत्वमेवास्त्विति। अत्रोच्यते। उक्तमेतत् साम्प्रतकालविषयं मतिज्ञानं श्रुतज्ञानं तु त्रिकालविषयं विशुद्धतरं चेति। किं चान्यत्। मतिज्ञानमिन्द्रियानिन्द्रियनिमित्तमात्मनो ज्ञस्वाभाव्यात्पारिणामिकम्। श्रुतज्ञानं तु तत्पूर्वकमाप्तोपदेशाद्भवतीति।२०।

## द्विविधोऽवधि ॥ २१ ॥

भवप्रत्ययः क्षयोपशमनिमित्तश्च ॥ २१ ॥

---

१ निश्चेतुमशक्यमित्यर्थः।

२ पूर्वाणि–उत्पादपूर्वादीनि ( २-४९ ), वस्तूनि-तदंशा, प्राभृतानि वस्त्वंशा, प्राभृतप्राभृतानि- प्राभृतांशा, अध्ययनानि-ततोऽल्पतराणि, उद्देशका — ततोऽल्पतरा। अ २ सू ४९

३ अ १ सू २७

४ अ १ सू २७

५ जानातीति ज्ञ। ज्ञत्वमेव ज्ञस्वाभाव्य ज्ञस्वाभाव्यमात्मरूपता। तस्मात्।

६ सर्वकालवर्ति न कदाचित्संसारे पर्यटत् एतद् भ्रष्ट यतो निगोदजीवानामपि अक्षरस्यानन्तभागो नित्योद्घाट इत्यागम। अत पारिणामिकम्। एकशरीरस्था अनन्ता जीवा निगोदजीवा।

७ मतिज्ञाने सति भवति नान्यतीत्यर्थ।

८ भव प्रत्ययो निमित्तकारणं यस्य स तथा। भवनिमित्तक भवहेतुक जन्मन — प्रभृति जायमानमित्यर्थ। अ १ सू २२

९ अयमेव गुणनिमित्त इत्यभिधीयते।

॥ भवप्रत्ययो नारकदेवानाम् ॥ २२ ॥

नारकाणां देवानां च यथास्वं भवप्रत्ययमवधिज्ञानं भवति। भवप्रत्ययः भवहेतुकं भवनिमित्तमित्यर्थः । तेषां हि भवोत्पत्तिरेव तस्य हेतुर्भवति पक्षिणामाकाशगमनवत् न शिक्षा न तपः इति ॥२२॥

॥ यथोक्तनिमित्तः षड्विकल्पः शेषाणाम् ॥ २३ ॥

यथोक्तनिमित्तः क्षयोपशमनिमित्त इत्यर्थः । तदेतदवधिज्ञानं क्षयोपशमनिमित्तं षड्विधं भवति शेषाणाम्। शेषाणामिति नारकदेवेभ्यः शेषाणाम्। तिर्यग्योनिजानां मनुष्याणां च। अवधिज्ञानावरणीयस्य कर्मणः क्षयोपशमाभ्यां भवति षड्विधम्। तद्यथा १ अनानुगामिकं २ आनुगामिकं ३ हीयमानकं ४ वर्धमानकं ५ अनवस्थितं ६ अवस्थितमिति ।

तत्रानानुगामिकं यत्र क्षेत्रे स्थितस्योत्पन्नं ततः प्रच्युतस्य प्रतिपतति प्रश्नादेशपुरुषज्ञानवत् ॥ आनुगामिकं यत्र क्वचिदुत्पन्नं क्षेत्रान्तरगतस्यापि न प्रतिपतति भास्करप्रकाशवत् घटरक्तभाववच्च ॥ हीयमानकं असंख्येयेषु द्वीपेषु समुद्रेषु पृथिवीषु विमानेषु तिर्यगूर्ध्व

१ स्थानयोऽप्यतानतिक्रमेण ।

२ अस्मन्मुद्रापितप्रमाणमीमांसाया १८ पृष्ठ टिप्पन्या द्रष्टव्यम् । त सू ८ ७।

३ प्रश्नं पृच्छन्तं जीवधातुमूलानां तं प्रश्नमादिशतीति प्रश्नादेशः प्रश्नादेशश्चासौ पुरुषश्चेति प्रश्नादेशपुरुषस्तस्य ज्ञानं तेन तुल्यमेतद् इदस्य पुरुषप्रश्नादेशज्ञानवदित्येव गमकम्। अथवा प्रश्नादेशः प्रधानपुरुषस्तन्निष्ठस्तत्परायणस्तस्य ज्ञानं तद्वदिति। का पुनर्भावना । यथा नैमित्तिकः कश्चिदादिष्टस्मिन्नभिदेय स्थाने शक्नोति संवादयितुं न सर्वत्र पृच्छ्यमानमर्थमेव तदप्यवधिज्ञानं यत्र स्थितस्योत्पन्नं तत्रस्थ एवोपलभते । नान्यत्रेति ।

४ घटस्यापाकादुद्धृतस्य तडागादिनीतस्य रक्तता यथा न भ्रश्यति तद्वदानुगामिकमवधिज्ञानं न प्रतिपतति ।

मघो यदुत्पन्न क्रमश. संक्षिप्यमाणं प्रतिपतति आ अङ्गुलासंख्येय-भागात् प्रतिपतत्येव वा परिच्छिन्नेन्धनोपादानसंतत्यग्निशिखावत् ॥ वर्धमानकं यदङ्गुलस्यासंख्येयभागादिषूत्पन्नं वर्धते आ सर्वलोकात् अधरोत्तरारणिनिर्मथनोत्पन्नोपात्तशुष्कोपचीयमानाधीयमानेन्धनराश्यग्निवत् ॥ अनवस्थित हीयते वर्धते च वर्धते हीयते च प्रतिपतति चोत्पद्यते चेति पुन पुनरूर्मिवत् ॥ अवस्थित यावति क्षेत्रे उत्पन्न भवति ततो न प्रतिपतत्या केवलप्राप्ते' आ भवक्षयाद्वा जात्यन्तर-स्थायि वा भवति लिङ्गवत् ॥ २३ ॥

उक्तमवधिज्ञानम् । मन'पर्यायज्ञान वक्ष्याम'—

॥ ऋजुविपुलमती मन पर्याय ॥ २४ ॥

मनःपर्यायज्ञान द्विविधम् । ऋजुमतिमन.पर्यायज्ञान विपुल-मतिमनःपर्यायज्ञान च ॥ २४ ॥

अत्राह । कोऽनयो. प्रतिविशेष इति । अत्रोच्यते—

॥ विशुद्ध्यप्रतिपाताभ्या तद्विशेष ॥ २५ ॥

विशुद्धिकृतश्चाप्रतिपातकृतश्चानयो' प्रतिविशेष । तद्यथा।

---

१ यथाप्रनीतेन्धनाग्निज्वाला नाशमाशु प्रतिपद्यते तद्वदेतदपि ।

२ अधरोत्तरौ–अध उपरिवर्तिनौ यावरणी शम्यादिकाष्ठनिर्मितौ ताभ्या यत् मथन परस्पर सघर्षण तेन निष्पन्न उद्भूतस्तथोपात्त प्रक्षिप्त शुष्क यत्तृणादि तेनोपची यमानो वृद्धिं गच्छन्नथ च आधीयमान' पुन पुन क्षिप्यमाण इन्धनाना पलालादीना राशिर्यत्राग्नौ तद्वत् । यथाग्नि प्रयत्नादुपजात सन पुनरिन्धनलाभाद्विवृद्धिमुपागच्छत्येव परमशुभाध्यवसायलाभादसौ पूर्वोत्पन्नो वर्धत इत्यर्थ' ।

३ मरण यावत् ।

४ जात्यन्तरमपि गच्छन्त जीव न मुञ्चति तदवधिज्ञानम् । तेनान्वित एव गच्छति ।

५ लिङ्गवत्–पुरुषवेदादिलिङ्ग त्रिधा तेन तुल्य वतत इति लिङ्गवत् । यथा इह जन्मन्युपादाय पुरुषवेद जन्तुर्जात्यन्तरमाधावति । एवमवधिमपि ।

६ अ १० सू. ७

ऋजुमतिमन पर्यायाद्विपुलमतिमनःपर्यायज्ञान विशुद्धतरम् । किं चान्यत् । ऋजुमतिमन.पर्यायज्ञान प्रतिपतत्यपि भूयो विपुलमतिमन-पर्यायज्ञान तु न प्रतिपततीति ॥ २५ ॥

अत्राह । अथावधिमन.पर्यायज्ञानयो क॰ प्रतिविशेष इति अत्रोच्यते—

॥ विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमन पर्याययो ॥ २६ ॥

विशुद्धिकृत॰ क्षेत्रकृत॰ स्वामिकृतो विषयकृतश्चानयोर्विशेषो भवत्यवधिमन पर्यायज्ञानयो । तद्यथा । अवधिज्ञानान्मनःपर्याय-ज्ञान विशुद्धतरम् । यावन्ति हि रूपाणि द्रव्याण्यवधिज्ञानी जानीते तानि मन पर्यायज्ञानी विशुद्धतराणि मनोगतानि जानीते । किं चान्यत् । क्षेत्रकृतश्चानयो प्रतिविशेष । अवधिज्ञान सयतस्य अ-सयतस्य वा सर्वगतिषु भवति । मन पर्यायज्ञान तु मनुष्यसयतस्यैव भवति नान्यस्य ॥ किं चान्यत् विषयकृतश्चानयो प्रतिविशेष॰ । रूपिद्रव्येष्वसर्वपर्यायेष्ववधेर्विषयनिबन्धो भवति । तदनन्तभागे मन -पर्यायस्येति ॥ २६ ॥

---

१ प्रतिपतति–म्रियते ।

२ यावज्जनकव्यापारात्सर्वथा विरतस्य मुन ।

३ पूर्वोक्तविपरीतस्य ।

४ रूपिद्रव्येषु-परमाण्वादिषु ।

५ एकज्ञानविषयतया सर्वपर्यायरहितेषु ।

६ विषयनिबन्ध –गोचरनिबन्ध । तद्धि एकैकस्य परमाणो कदाचित् असख्येयान् पर्यायान् नानाति कदाचित् सख्येयान् जघन्येन चतुरो रूपरसगन्धस्पर्शान् । न तु कदाप्यनन्तान् । केवलज्ञानस्यैवानन्तपर्यायग्राहकत्वात् । मन पर्यायज्ञानस्य तु रूपिद्रव्याणि न सर्वाणि विषयस्तेषामवधिज्ञानज्ञाताना द्रव्याणामनन्तभागीकृताना य एकोऽनन्तभागस्तस्मिन्नेवास्य विषयनिबन्ध॰ । तस्मादतीन्द्रियत्वादितौल्येऽप्यवधिमन पर्याययोर्भेद इति सिद्धम् ।

अत्राह । उक्तं मन पर्यायज्ञानम् । अथ केवलज्ञानं किमिति । अत्रोच्यते । केवलज्ञानं दशमेऽध्याये वक्ष्यते । मोहक्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलमिति ।

अत्राह । एषां मतिज्ञानादीनां ज्ञानानां कः कस्य विषयनिबन्ध इति अत्रोच्यते—

॥ मतिश्रुतयोर्निबन्ध• सर्वद्रव्येष्वसर्वपर्यायेषु ॥ २७ ॥

मतिज्ञानश्रुतज्ञानयोर्विषयनिबन्धो भवति सर्वद्रव्येष्वसर्वपर्यायेषु। ताभ्यां हि सर्वाणि द्रव्याणि जानीते न तु सर्वै• पर्यायैः ॥२७॥

॥ रूपिष्ववधेः ॥ २८ ॥

रूपिष्वेव द्रव्येष्ववधिज्ञानस्य विषयनिबन्धो भवति असर्वपर्यायेषु । सुविशुद्धेनाप्यवधिज्ञानेन रूपीण्येव द्रव्याण्यवधिज्ञानी जानीते तान्यपि न सर्वैः पर्यायैरिति ॥ २८ ॥

॥ तदनन्तभागे मन पर्यायस्य ॥ २९ ॥

यानि रूपीणि द्रव्याण्यवधिज्ञानी जानीते ततोऽनन्तभागे मनःपर्यायस्य विषयनिबन्धो भवति । अवधिज्ञानविषयस्यानन्तभाग मन पर्यायज्ञानी जानीते रूपिद्रव्याणि मनोरहस्यविचारगतानि च मानुषक्षेत्रपर्यापन्नानि विशुद्धतराणि चेति ॥ २९ ॥

---

१ अस्मन्मुद्रापितप्रमाणमीमासाया पृ १८ टिप्पन्या द्रष्टव्यम् ।

२ सर्वाणि च तानि द्रव्याणि च सर्वद्रव्याणि तेषु धर्माधर्माकाशपुद्गलजीवास्तिकायाख्येषु । असर्वपर्यायेषु सर्वे निरविशेषा उत्पादव्ययध्रौव्यात्मका पर्याया येषां तानि सर्वपर्यायाणि न सर्वपर्यायाणि असर्वपर्यायाणि तेषु ।

३ शुक्लादिगुणोपेतानि रूपीणि द्रव्याणि जानात्यवधिज्ञानी तेषामवधिज्ञानदृष्टानामनन्तभागो यस्तस्मिन्ननन्तभागे एकस्मिन् मन पर्यायज्ञानी जानीते ।

॥ सर्वद्रव्यपर्यायेषु केवलस्य ॥ ३० ॥

सर्वद्रव्येषु सर्वपर्यायेषु च केवलज्ञानस्य विषयनिबन्धो भवति। तद्धि सर्वभावग्राहक सम्भिन्नलोकालोकविषयम्। नात' पर ज्ञानमस्ति। न च केवलज्ञानविषयात्पर किंचिदन्यज्ज्ञेयमस्ति। केवल परिपूर्ण समग्रमसाधारण निरपेक्ष विशुद्ध सर्वभावज्ञापक लोकालोकविषयमनन्तपर्यायमित्यर्थ' ॥ ३० ॥

अत्राह। एषा मतिज्ञानादीना युगपदेकस्मिञ्जीवे कति भवन्तीति। अत्रोच्यते—

॥ एकादीनि भाज्यानि युगपदेकस्मिन्ना चतुर्भ्य ॥३१॥

एषां मत्यादीना ज्ञानानामादित एकादीनि भाज्यानि युगपदेकस्मिञ्जीवे आ चतुर्भ्य । कस्मिंश्चिज्जीवे मत्यादीनामेक भवति। कस्मिंश्चिज्जीवे द्वे भवत.। कस्मिंश्चित्त्रीणि भवन्ति। कस्मिंश्चिच्चत्वारि भवन्ति। श्रुतज्ञानस्य तु मतिज्ञानेन नियत. सहभावस्तत्पूर्वकत्वात्। यस्य तु मतिज्ञान तस्य श्रुतज्ञान स्याद्वा न वेति।

अत्राह। अथ केवलज्ञानस्य पूर्वैर्मतिज्ञानादिभि' किं सहभावो भवति। नेत्युच्यते। केचिदाचार्या व्याचक्षते। नाभाव' किं तु

१ सम्भिन्नौ सपूर्णौ यौ लोकालोकौ तद्विषयम्। लोको धर्माधर्मद्रव्यद्वयावच्छिन्नमाकाश यत्र त्वाकाशे तौ धर्माधर्मौ न स्त सोऽलोक ।

२ क्वचित्प्रथम क्वचिद् द्वे इत्यादिप्रकारेण विकल्पनीयानि।

३ केचिदाचार्या व्याचक्षते—नाभाव एवास्ति पूर्वप्राप्ताना मतिज्ञानादीना नाशकाभावात्। ऐकाधिकरण्यावच्छिन्नस्वपूर्ववर्तितासम्बन्धेन केवलस्यैव स्वसमानाधिकरण गुणनाशकत्वे ज्ञानचतुष्टयवत् ज्ञानीयदर्शनमुपितत्वादपि नाशप्रसङ्गात् न च तन्नाशपरस्यापि सम्भवात् तस्मात्सद्भावस्थानमस्त्येव मत्यादीना केवलेन सत किमिति तानि स्वमर्थं न प्रकाशयन्ति उच्यते अप्रभवात् तदाह किं त्वभिभूतत्वात् इत्यप्रभावत्वात्। अकिञ्चित्कराणि स्वकार्याकारीणि भवन्तीन्द्रियवच्चक्षुरादिवत्। यथाहि केवलिन सदपि चक्षुरादीन्द्रिय विषयग्रहण प्रति न व्याप्रियते। केवलप्रकाशेन चरितार्थत्वात्। एव मत्यादिचतुष्टयमपीति भाव ।

तदभिभूतत्वादकिंचित्कराणि भवन्तीन्द्रियवत् । यथा वा व्यभ्र[1] नभसि आदित्य उदिते भूरितेजस्त्वादादित्येनाभिभूतान्यन्यतेजांसि ज्वलनमणिचन्द्रनक्षत्रप्रभृतीनि प्रकाशन प्रत्यकिंचित्कराणि भवन्ति तद्वदिति । केचिदप्याहुः । अपायसद्द्रव्यतया मतिज्ञान तत्पूर्वक श्रुतज्ञानमवधिज्ञानमनःपर्यायज्ञाने च रूपिद्रव्यविषये तस्मान्नैतानि केवलिनः सन्तीति ॥ किं चान्यत् । मतिज्ञानादिषु चतुर्षु पर्यायेणो पयोगो भवति न युगपत् । संभिन्नज्ञानदर्शनस्य तु भगवतः केवलि नो युगपत्सर्वभावग्राहके निरपेक्षे केवलज्ञाने केवलदर्शने चानुसमय[2] मुपयोगो भवति ॥ किं चान्यत् । क्षयोपशमजानि चत्वारि ज्ञानानि पूर्वाणि क्षयादेव केवल । तस्मान्न केवलिनः शेषाणि ज्ञानानि सन्तीति ॥ ३१ ॥

## ॥ मतिश्रुतावधयो विपर्ययश्च ॥ ३२ ॥

मतिज्ञान श्रुतज्ञानमवधिज्ञानमिति । विपर्ययश्च भवत्यज्ञान चेत्यर्थ । ज्ञानविपर्ययोऽज्ञानमिति ।

अत्राह । तदेव ज्ञान तदेवाज्ञानमिति । ननु च्छायातपवच्छी-तोष्णवच्च तदत्यन्तविरुद्धमिति । अत्रोच्यते । मिथ्यादर्शनपरिग्रहाद्वि-परीतग्राहकत्वमेतेषाम् । तस्मादज्ञानानि भवन्ति । तद्यथा । मत्यज्ञान[3]

---

१ व्यभ्रे—मेघरहिते ।

२ अनुगतोऽव्यवहित समयोऽत्यन्ताविभागकालो यत्र कालसन्ताने स कालसन्तानोऽनुसमयस्तमनुसमय कालसन्तानमुपयोगो भवति । वारवारेणोपयोगो भवतीति यावत् । एकस्मिन् समये केवलज्ञानोपयोगे वृत्ते ततोऽन्यस्मिन्केवलदर्शनोपयोग इति । एव सर्वकालमवसेयम् ।

३ मिथ्यादृष्टिपरिगृहीता मतिर्मत्यज्ञानम् ।

श्रुताज्ञान विभङ्गज्ञानमिति । अवधिविपरीतो विभङ्ग इत्युच्यते॥३२॥

अत्राह । उक्त भवता सम्यग्दर्शनपरिगृहीत मत्यादिज्ञान भवत्यन्यथाऽज्ञानमेवेति । मिथ्यादृष्टयोऽपि च भव्याश्चाभव्याश्चे-न्द्रियनिमित्तानविपरीतान्स्पर्शादीनुपलभन्ते उपदिशन्ति च स्पर्श स्पर्श इति रस रस इति । एव शेषान । तत्कथमेतदिति । अत्रो-च्यते । तेषां हि विपरीतमेतद्भवति

॥ सदसतोरविशेषाद्यदृच्छोपलब्धेरुन्मत्तवत् ॥ ३३ ॥

यथोन्मत्त. कर्मोदयादुपहतेन्द्रियमतिविपरीतग्राही भवति सोऽश्व गौरित्यध्यवस्यति गा चाश्व इति लोष्ट सुवर्णमिति सुवर्ण लोष्ट इति लोष्ट च लोष्ट इति सुवर्ण सुवर्णमिति तस्यैवमविशेषेण लोष्ट सुवर्ण सुवर्ण लोष्टमिति विपरीतमध्यवस्यतो नियतम-ज्ञानमेव भवति । तद्वन्मिथ्यादर्शनोपहतेन्द्रियमतेर्मतिश्रुतावधयोऽ-प्यज्ञान भवन्ति ॥ ३३ ॥

॥ नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दा नयाः ॥ ३४ ॥

१ नैगमः २ सङ्ग्रहो ३ व्यवहार ४ ऋजुसूत्र. ५ शब्द इत्येते पञ्च नया भवन्ति ॥ ३४ ॥

तत्र—

---

१ मिथ्यादृष्टिपरिगृहीत श्रुत श्रुताज्ञानम् ।

२ मिथ्यादृष्टिपरिगृहीतोऽवधिर्विभङ्गज्ञानम् ।

३ भवति परमपदयोग्यतामापादयति इति भव्य सिद्धिगमनयोग्य ।

४ तथाविधानादिपारिणामिकभावात् ( कदाचनापि ) सिद्धिगमनायोग्य ।

५ गन्धरूपशब्दानवैपरीत्येन ।

६ कदाचिच्च लोष्ट लोष्टमेवाध्यवस्यति कदाचिद्वा सुवर्णमित्येव तस्यो मत्त स्यैवमुन्मत्तेनाविशेषेण अयथावदवबोधे लोष्ट सुवर्णमित्येव विपरीतमध्यवस्यत नियत निश्चितमज्ञानमेव कुत्सितमेव तज्ज्ञान भवतीति ।

७ अ १ सू ३' भाष्यम् ।

## ॥ आद्यशब्दौ द्वित्रिभेदौ ॥ ३५ ॥

आद्य इति सूत्रक्रमप्रामाण्यान्नैगममाह । स द्विभेदो देशपरिक्षेपी सर्वपरिक्षेपी चेति । शब्दस्त्रिभेदः साम्प्रतः समभिरूढ एवम्भूत इति ॥

अत्राह । किमेषा लक्षणमिति । अत्रोच्यते । निगमेषु येऽभिहिता शब्दास्तेषामर्थ शब्दार्थपरिज्ञान च देशसमग्रग्राही नैगमः । अर्थाना सर्वैकदेशसङ्ग्रहण सङ्ग्रह । लौकिकसम उपचारप्रायो विस्तृतार्थो व्यवहारः । सता साम्प्रतानामर्थानामभिधानपरिज्ञानमृजुसूत्र । यथार्थाभिधान शब्द । नामादिषु प्रसिद्धपूर्वाच्छब्दादर्थे प्रत्यय. साम्प्रत । सत्स्वर्थेष्वसङ्क्रम समभिरूढः। व्यञ्जनार्थयोरेवम्भूत इति ॥

अत्राह । उद्दिष्टा भवता नैगमादयो नयाः। तन्नया इति क पदार्थ इति । नया प्रापका कारका साधका निर्वर्तका निर्भासका उपलम्भका व्यञ्जका इत्यनर्थान्तरम् । जीवादीन्पदार्थान्नयन्ति प्राप्नुवन्ति कारयन्ति साधयन्ति निर्वर्तयन्ति निर्भासयन्ति उपलम्भयन्ति व्यञ्जयन्तीति नया ॥

अत्राह । किमेते तन्त्रान्तरीया वादिन आहोस्वित्स्वतन्त्रा एव चोदकपक्षग्राहिणो मतिभेदेन विप्रधाविता इति । अत्रोच्यते । नैते तन्त्रान्तरीया नापि स्वतन्त्रा मतिभेदेन विप्रधाविताः । ज्ञेयस्य त्वर्थस्याध्यवसायान्तराण्येतानि । तद्यथा । घट इत्युक्ते योऽसौ चेष्टाभिर्निर्वृत्त ऊर्ध्वकुण्डलौष्ठायतवृत्तग्रीवोऽधस्तात्परिमण्डलो जला

---

१ चोदको दुरुक्तादिसूचकस्तस्य पक्षो विषयस्त चोदकपक्ष ग्रहीतु शीलमेषामिति चोदकपक्षग्राहिण । मतिभेद बुद्धिभेद । तेन विप्रधाविता अयथार्थनिरूपका इति यावत् ।

दीनामाहरणवारणसमर्थ उत्तरगुणनिर्वर्तनानिर्वृत्तो द्रव्यविशेषस्तस्मिन्नेकस्मिन्विशेषवति तज्जातीयेषु वा सर्वेष्वविशेषात्परिज्ञानं नैगमनय॰। एकस्मिन्वा बहुषु वा नामादिविशेषितेषु साम्प्रतातीतानागतेषु घटेषु सम्प्रत्यय॰ सङ्ग्रह । तेष्वेव लौकिकपरीक्षकग्राह्येषूपचारगम्येषु यथास्थूलार्थेषु सम्प्रत्ययो व्यवहार॰ । तेष्वेव सत्सु साम्प्रतेषु सम्प्रत्यय ऋजुसूत्र । तेष्वेव साम्प्रतेषु नामादीनामन्यतमग्राहिषु प्रसिद्धपूर्वकेषु घटेषु सम्प्रत्यय॰ साम्प्रत शब्द । तेषामेव साम्प्रतानामध्यवसायासङ्क्रमो वितर्कध्यानवत् समभिरूढ । तेषामेव व्यञ्जनार्थयोरन्योन्यापेक्षार्थग्राहित्वमेवम्भूत इति ॥

अत्राह । एवमिदानीमेकस्मिन्नर्थेऽध्यवसायनानात्वान्ननु विप्रतिपत्तिप्रसङ्ग इति । अत्रोच्यते । यथा सर्वमेकं सदविशेषात् सर्वं द्वित्वं जीवाजीवात्मकत्वात् सर्वं त्रित्वं द्रव्यगुणपर्यायावरोधात् सर्वं चतुष्कं चतुर्दर्शनविषयावरोधात् सर्वं पञ्चत्वमस्तिकायावरोधात् सर्वं षट्त्वं षड्द्रव्यावरोधादिति । यथैता न विप्रतिपत्तयोऽथ चाध्यवसाय

---

१ उत्तरोत्तरगुणा पाकनरक्तादिगुणास्तेषा निर्वर्तना परिसमाप्तिस्तत्सपन्न ।

२ चक्षुर्दर्शनाचक्षुर्दर्शनावधिदर्शनकेवलदर्शनरूपाणि चत्वारि दर्शनानि । तत्र चक्षुषा दर्शनं वस्तुसामान्यांशात्मकं ग्रहणं चक्षुर्दर्शनम् । अचक्षुषा चक्षुर्वर्जेनापरेन्द्रियचतुष्टयेन मनसा च यद्दर्शनं सामान्यांशात्मकं ग्रहणं तदचक्षुर्दर्शनम् । अवधिना रूपिद्रव्यमर्यादया दर्शनं सामान्यांशग्रहणमवधिदर्शनम् । केवलेन सम्पूर्णवस्तुतत्त्वग्राहकबोधविशेषरूपेण यद्दर्शनं सामान्यांशग्रहणं तत्केवलदर्शनमिति ।

३ अस्तीत्ययं त्रिकालवचनो निपात अभूवन् भवन्ति भविष्यन्ति चेति भावना । अतोऽस्ति च ते प्रदेशाना (प्रदेशा प्रकृष्टा निरंशा देशा ) कायाश्च राशय इति अस्तिशब्देन प्रदेशप्रदेशा क्वचिदुच्यन्ते ततश्च तेषा या काया अस्तिकाया । ते च पञ्च १ धर्मास्तिकाय २ अधर्मास्तिकाय ३ आकाशास्तिकाय ४ जीवास्तिकाय ५ पुद्गलास्तिकाय । इति ।

४ धर्माधर्माकाशपुद्गलजीवा कालश्चेति षड्द्रव्याणि ।

स्थानान्तराण्येतानि तद्वत्रयवादा इति । किं चान्यत् । यथा मति-ज्ञानादिभि पञ्चभिर्ज्ञानैर्धर्मादीनामस्तिकायानामन्यतमोऽर्थ. पृथक् पृथगुपलभ्यते पर्यायविशुद्धिविशेषादुत्कर्षेण न च ता विमतिपत्तय तद्वन्नयवादा । यथा वा प्रत्यक्षानुमानोपमानाप्तवचने प्रमाणैरेकोऽर्थ॰ प्रमीयते स्वविषयनियमात् न च ता विमतिपत्तयो भवन्ति तद्वन्नयवादा इति ।

आह च—

नैगमशब्दार्थानामेकानेकार्थनयगमापेक्ष॰ ।
देशसमग्रग्राही व्यवहारी नैगमो ज्ञेय ॥ १ ॥
यत्सङ्गृहीतवचन सामान्ये देशतोऽथ च विशेषे ।
तत्सङ्ग्रहनयनियत ज्ञान विद्यान्नयविधिज्ञ ॥ २ ॥
समुदायव्यक्त्याकृतिसत्तासञ्ज्ञादिनिश्चयापेक्षम् ।
लोकोपचारनियत व्यवहार विस्तृत विद्यात् ॥ ३ ॥
साम्प्रतविषयग्राहकमृजुसूत्रनय समासतो विद्यात् ।
विद्याद्यथार्थशब्द विशेषितपद तु शब्दनयम् ॥४॥ इति ॥

अत्राह । अथ जीवो नोजीव अजीवो नोअजीव इत्याका रिते केन नयेन कोऽर्थ प्रतीयत इति । अत्रोच्यते । जीव इत्या कारिते नैगमदेशसङ्ग्रहव्यवहारर्जुसूत्रसाम्प्रतसमभिरूढै॰ पञ्चस्वपि गतिष्वन्यतमो जीव इति प्रतीयते । कस्मात् । एते हि नया जीव प्रत्यौपशमिकादियुक्तभावग्राहिणः । नोजीव इत्यजीवद्रव्य जीवस्य वा देशप्रदेशौ । अजीव इत्यजीवद्रव्यमेव । नोअजीव इति जीव एव तस्य वा देशप्रदेशाविति । एवम्भूतनयेन तु जीव इत्याकारिते

१ अ ५ सू १

२ ओदन्त १।२।३७ इति हैमसूत्रेण सन्ध्यभाव ।

भवस्थो जीव. प्रतीयते । कस्मात् । एष हि नयो जीवमौदयिक-भावग्राहक एव । जीवतीति जीव. प्राणिति प्राणान्धारयतीत्यर्थः । तच्च जीवन सिद्धे न विद्यते तस्माद्भवस्थ एव जीव इति । नोजीव इत्यजीवद्रव्य सिद्धो वा । अजीव इत्यजीवद्रव्यमेव । नोअजीव इति भवस्थ एव जीव इति । समग्रार्थग्राहित्वाच्चास्य नयस्य नानेन देशप्रदेशौ गृह्येते । एव जीवौ जीवा इति द्विवचनबहुत्वाकारितेष्वपि । सर्वसङ्ग्रहणे तु जीवो नोजीव अजीवो नोअजीव॰ जीवौ नोजीवौ अजीवौ नोअजीवावित्येकद्विवाकारितेषु शून्यम् । कस्मात् । एष हि नय सङ्ख्यानानन्त्याज्जीवानां बहुत्वमेवेच्छति यथार्थग्राही । शेषास्तु नया जात्यपेक्षमेकस्मिन्बहुवचनत्व बहुषु बहुवचन सर्वाकारितग्राहिण इति । एव सर्वभावेषु नयवादाधिगम कार्य. ।

अत्राह । पञ्चाना ज्ञानाना सविपर्ययाणां कानि को नय श्रयत इति । अत्रोच्यते । नैगमादयस्त्रय सर्वाण्यष्टौ श्रयन्ते । ऋजुसूत्रनयो मतिज्ञानमत्यज्ञानवर्जानि षट् ।

अत्राह । कस्मान्मतिं सविपर्ययां न श्रयत इति । अत्रोच्यते ।

---

१ ससारी ।

२ प्राणा –इन्द्रियाणि पञ्च मनोवाक्कायास्त्रय प्राणापानावेक आयुश्चेति । पञ्चेन्द्रियाणि द्रव्यप्राणा शेषास्तु भावप्राणा ।

३ जीवन प्राणधारणरूपम् सिद्धे न विद्यते ।

४ एव तावच्चत्वारो विकल्पा एकवचनेन दर्शिता । एव द्विवचनेन चत्वारो विकल्पा नेया । १ जीवौ २ नोजीवौ ३ अजीवौ ४ नोअजीवौ तथा च बहुवचनेनापि चत्वार एव १ जीवा २ नोजीवा ३ अजीवा ४ नोअजीवा नेया । द्वित्वबहुत्वाकारितेषु द्विवचनबहुवचनाभ्यामुच्चारितेषु ।

५ एष–सङ्ग्रहनय ।

६ सविपर्ययाणाम्–अज्ञानसहितानाम् ।

श्रुतस्य सविपर्ययस्योपग्रहत्वात् । शब्दनयस्तु द्वे एव श्रुतज्ञान केवलज्ञाने श्रयते ।

अत्राह । कस्मान्नेतराणि श्रयत इति । अत्रोच्यते । मत्यवधिमन पर्यायाणा श्रुतस्यैवोपग्राहकत्वात् । चेतनाज्ञस्वाभाव्याच्च सर्वजीवाना नास्य कश्चिन्मिथ्यादृष्टिरज्ञो वा जीवो विद्यते । तस्मादपि विपर्ययांश्च श्रयत इति । अतश्च प्रत्यक्षानुमानोपमानाप्तवचनानामपि प्रामाण्यमभ्यनुज्ञायत इति ।

अत्राह च—

विज्ञायैकार्थपदान्यर्थपदानि च विधानमिष्ट च ।
विन्यस्य परिक्षेपान्नयैः परीक्ष्याणि तत्त्वानि ॥ १ ॥
ज्ञान सविपर्यासं त्रय. श्रयन्त्यादितो नया. सर्वम् ।
सम्यग्दृष्टेर्ज्ञानं मिथ्यादृष्टेर्विपर्यासः ॥ २ ॥
ऋजुसूत्र षट् श्रयते मते. श्रुतोपग्रहादनन्यत्वात् ।
श्रुतकेवले तु शब्द श्रयते नोऽन्यच्छ्रुताङ्गत्वात् ॥ ३ ॥
मिथ्यादृष्ट्यज्ञाने न श्रयते नास्य कश्चिदज्ञोऽस्ति ।
ज्ञस्वाभाव्याज्जीवो मिथ्यादृष्टिर्न चाप्यज्ञ ॥ ४ ॥
इति नयवादाश्चित्रा क्वचिद्विरुद्धा इवाथ च विशुद्धा ।
लौकिकविषयातीतास्तत्त्वज्ञानार्थमधिगम्या ॥५॥ ।३५।

इति सभाष्यतत्त्वार्थाधिगमसूत्रेषु प्रथमोऽध्याय समाप्त ॥

---

१ व्यवहारावधारणदशायामुपजीवकत्वात् ।

२ स्वालोचितार्थस्य परप्रत्यायने श्रुतस्यैव सुरानिरीश्वरत्वादित्यर्थ ।

३ चेतना—सामान्यपरिच्छेदकत्व । ज्ञ इति भावप्रधाननिर्देशात् ज्ञत्व विशेषपरिच्छेदिता तयो स्वाभाव्य तथाभवन तस्मात् ।

# अथ द्वितीयोऽध्यायः ।



अत्राह । उक्तं भवता जीवादीनि तत्त्वानीति । तत्र को जीवः कथं लक्षणो वेति । अत्रोच्यते—

**औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च ॥ १ ॥**

१ औपशमिकः २ क्षायिकः ३ क्षायोपशमिकः ४ औदयिकः ५ पारिणामिक इत्येते पञ्च भावा जीवस्य स्वतत्त्वं भवन्ति ॥ ५ ॥

**द्विनवाष्टादशैकविंशतित्रिभेदा यथाक्रमम् ॥ २ ॥**

एते औपशमिकादयः पञ्च भावा द्विनवाष्टादशैकविंशतित्रिभेदा भवन्ति । तद्यथा । औपशमिको द्विभेदः क्षायिको नवभेदः क्षायोपशमिकोऽष्टादशभेदः औदयिक एकविंशतिभेदः पारिणामिकस्त्रिभेद इति । यथाक्रममिति येन सूत्रक्रमेणात ऊर्ध्वं वक्ष्यामः ॥ २ ॥

**सम्यक्त्वचारित्रे ॥ ३ ॥**

सम्यक्त्वं चारित्रं च द्वावौपशमिकौ भावौ भवत इति ॥३॥

---

१ अत्र घूणाक्षरन्यायात्पारिणामिकभावः—न खलु घूणाख्यजन्तुर्वेधितपुस्तकाद्यसूक्ष्मचूर्णकणसमुदायाद्य पतनम्वय परिणतापरस्य कश्चिद्हेतुर्वको भवत इति । रूपान्तरपरिणमन ह्युदय स च परमार्थतः पुद्गलेष्वेव, उपचारात्तु जीवेष्वपीति यतो हि कदाचित्परमाणुरेकगुणकृष्णवर्णपरिणतो भूत्वा द्विगुणकृष्णमपरिणतः स्यात् । एकगुणत्वाद् द्विगुणत्वं रूपान्तरमेव इत्येवमन्यत्रापि परिणामः षड्द्रव्येऽपि ।

२ स्वतत्त्व–स्वभाव ।

३ सम्यक्त्व–तत्त्वरुचि । सदसत्क्रियाप्रवृत्तिनिवृत्तिलक्षणम् ।

ज्ञानदर्शनदानलाभभोगोपभोगवीर्याणि च ॥ ४ ॥

ज्ञानं दर्शनं दानं लाभो भोग उपभोगो वीर्यमित्येतानि च नव क्षायिका भावा भवन्तीति ॥ ४ ॥

ज्ञानाज्ञानदर्शनदानादिलब्धयश्चतुस्त्रित्रिपञ्चभेदाः सम्यक्त्वचारित्रसंयमासंयमाश्च ॥५॥

ज्ञानं चतुर्भेदं मतिज्ञानं श्रुतज्ञानमवधिज्ञानं मनःपर्यायज्ञानमिति । अज्ञानं त्रिभेदं मत्यज्ञानं श्रुताज्ञानं विभङ्गज्ञानमिति । दर्शनं त्रिभेदं चक्षुर्दर्शनमचक्षुर्दर्शनमवधिदर्शनमिति । लब्धयः पञ्चविधा दानलब्धिर्लाभलब्धिर्भोगलब्धिरुपभोगलब्धिर्वीर्यलब्धिरिति। सम्यक्त्वं चारित्रं संयमासंयम इत्येतेऽष्टादश क्षायोपशमिका भावा भवन्तीति ॥ ५ ॥

---

१ अ ७ सू ३३

२ भुज्यते सकृदुपयुज्यत इति भोगः आहारमाल्यादि ।

३ उपेत्य अधिकं पुनरुपयुज्यमानतया भुज्यते इत्युपभोगः ।

४ विशेषेण ईरयति प्रवर्तयति आत्मानं तासु तासु क्रियासु इति वीर्यम् पराक्रम इत्यर्थः ।

५ चक्षुषा दर्शनमुपलब्धिः सामान्यार्थग्रहणं स्कन्धावारोपयोगवत् तदहर्जातदारकनयनोपलब्धिवद्वा व्युत्पन्नस्यापि अचक्षुर्दर्शनं शेषेन्द्रियैः श्रोत्रादिभिः सामान्यार्थग्रहणम् । अवधिदर्शनावरणक्षयोपशमनादिशेषग्रहणविमुखोऽवधिदर्शनमित्युच्यते । नियमतस्तु तत्सम्यग्दृष्टिस्वामिकम् एवमेतत्त्रिविधमपि दर्शनावरणकर्मणः (८-८) क्षयोपशमादुपजायत इति ।

६ अ ६ सू २०

## गतिकषायलिङ्गमिथ्यादर्शनाज्ञानासंयतासिद्धत्वलेश्याश्चतुश्चतुस्त्र्येकैकैकैकषड्भेदाः ॥ ६ ॥

गतिश्चतुर्भेदा नारकतैर्यग्योनमनुष्यदेवा इति । कषायश्चतुर्भेदः क्रोधी मानी मायी लोभीति । लिङ्गं त्रिभेदं स्त्रीपुमान्नपुंसकमिति । मिथ्यादर्शनमेकभेदं मिथ्यादृष्टिरिति । अज्ञानमेकभेदमज्ञानीति । असंयतत्वमेकभेदमसंयतोऽविरत इति । असिद्धत्वमेकभेदमसिद्ध इति । एकभेदमेकविधमिति । लेश्याः षड्भेदाः कृष्णलेश्या नीललेश्या कापोतलेश्या तेजोलेश्या पद्मलेश्या शुक्ललेश्या । इत्येते एकविंशतिरौदयिकभावा भवन्ति ॥ ६ ॥

---

१ गतिनामकर्मोदयादविरतमवान्तरगमनयोग्यत्वं गतेर्लक्षणम् ।

२ कषः संसारस्तस्याय उपादानकारणविशेषः कषायः । अथवा कष्यन्ते पीड्यन्ते प्राणिनः परस्परं यस्मिन्नसौ कषः संसारः । तमयन्ते प्राप्नुवन्ति जन्तवोऽनेनेति कषायः क्रोधमानमायालोभः । संसारप्रापणनिमित्तरूपत्वं कषायस्य लक्षणम् ।

३ वेदोदयजन्यत्वे सति मैथुनेच्छारूपत्वं लिङ्गस्य लक्षणम् ।

४ अतत्त्वे तत्त्वबुद्धिरूपत्वम् ।

५ मिथ्यात्वमोहोदये सति अतत्त्वज्ञानरूपत्वं अज्ञानस्य लक्षणम् ।

६ कर्मोदयप्रभवत्वमसिद्धस्य लक्षणम् ।

७ (१) कृष्णद्रव्यसान्निध्याद् मूलाद् वृक्षोन्मूलनपरिणामतुल्यरूपत्वं कृष्णलेश्याया लक्षणम् । (२) नीलद्रव्यसान्निध्यात्फलादनेच्छया महाशाखापातनपरिणामतुल्यपरिणामरूपत्वं नीललेश्यालक्षणम् । (३) कापोतद्रव्यसान्निध्यात्फलादनेच्छया प्रशाखापातनपरिणामतुल्यपरिणामरूपत्वं कापोतलेश्यालक्षणम् । (४) रक्तवर्णद्रव्यसान्निध्यात्फलादनेच्छया गुच्छसंदोहच्छेदनकारणपरिणामतुल्यपरिणामरूपत्वं तेजोलेश्यालक्षणम् । (५) पीतवर्णद्रव्यसान्निध्यात्फलादनेच्छया फलच्छेदनपरिणामतुल्यपरिणामरूपत्वं पद्मलेश्यालक्षणम् । (६) शुक्लवर्णद्रव्यसान्निध्यात्पतितफलादनेच्छया फलग्रहणपरिणामतुल्यपरिणामरूपत्वं शुक्ललेश्यालक्षणम् ।

## जीवभव्याभव्यत्वादीनि च ॥ ७ ॥

जीवत्वं भव्यत्वमभव्यत्वमित्येते त्रयः पारिणामिका भावा भवन्तीति । आदिग्रहणं किमर्थमिति । अत्रोच्यते । अस्तित्वमन्यत्वं कर्तृत्वं भोक्तृत्वं गुणवत्त्वमसर्वगतत्वमनादिकर्मसन्तानबद्धत्वं प्रदेशत्वमरूपत्वं नित्यत्वमित्येवमादयोऽप्यनादिपारिणामिका जीवस्य भावा भवन्ति। धर्मादिभिस्तु समाना इत्यादिग्रहणेन सूचिताः । ये जीव

---

१ द्विनवाष्टादिसूत्रेण जीववर्तिन एव त्रिपञ्चाशद्भेदाः सङ्गृहीता इति संख्यानियमो न भिद्यते न चानर्थक्यं सूत्रस्य जीववर्तिनोऽजीववर्तिनश्च साधारणाः पारिणामिकास्ते तत्र नोपात्तास्तदुपादानायेदमादिग्रहणम् ।

२ अस्तित्वं भावानां मौलो धर्मः सत्तारूपत्वम् ।

३ शरीरादात्मनस्तद्विलक्षणत्वात्परलोके सद्भावाच्चावश्यमन्यत्वमभ्युपेयम् ।

४ शुभाशुभकर्मणो निर्वर्तकत्वं योगप्रयोगसामर्थ्यात् ।

५ कर्तृत्वादेव च भोक्तृत्वम् ।

६ क्रोधादिमत्त्वात् गुणवत्त्वं ज्ञानाद्यात्मकत्वाद्वा । परमाण्वादावपि गुणवत्त्वं एकवर्णादित्वात्समानम् ।

७ त्वक्पर्यन्तशरीरमात्रव्यापित्वात् असर्वगतत्वं संसारिणोऽऽत्मनो मुक्तस्यापि समन्ततः परिमितत्वात् । स्वदेहप्रमाणत्रिभागहीनावगाहात्मकत्वादसर्वव्यापिता परमाण्वादिभिस्तुल्या ।

८ अविद्यमानादिकर्मसन्तत्या वेष्टितः संसारी संसृतौ पर्यटतीति न मुक्त इति ।

९ प्रदेशत्वं तु लोकाकाशप्रदेशपरिमाणप्रदेश एक आत्मा भवति ।

१० रूपरसगन्धस्पर्शविरहितत्वादात्मनोऽरूपत्वं तच्चाकाशादिभिस्तुल्यम् ।

११ 'तद्भावाव्ययं नित्यम्' ५।२० इति वक्ष्यते । नित्यश्च ततो ज्ञानादिसद्भावादयमात्मा तुल्यं चैतदाकाशादिभिरेवमेते दश धर्माः साधारणा भाष्यकृतोपदर्शिता आदिशब्दाक्षिप्ताः ।

१२ पुनरप्यादिग्रहणं कुर्वन् ज्ञापयत्यनन्तधर्मकमेकं तत्राशक्या प्रस्तारयितुं सर्वे धर्माः प्रवचनज्ञेन पुंसा यथासंभवमायोजनीयाः । क्रियावत्त्वं पर्यायोपयोगिता प्रदेशाष्टकनिश्चलता एवंप्रकाराः सन्ति भूयांसः ।

स्यैव वैशेषिकास्ते स्वशब्देनोक्ता इति । एते पञ्च भावास्त्रिपञ्चाश-द्भेदा जीवस्य स्वतत्त्व भवन्ति । अस्तित्वादयश्च ॥ ७ ॥

किं चान्यत्—

उपयोगो लक्षणम् ॥ ८ ॥

उपयोगो लक्षणं जीवस्य भवति ॥ ८ ॥

स द्विविधोऽष्टचतुर्भेद ॥ ९ ॥

स उपयोगो द्विविध. साकारोऽनाकारश्च नानोपयोगो दर्शनोपयोगश्चेत्यर्थ. । स पुनर्यथासङ्ख्यमष्टचतुर्भेदो भवति । ज्ञानोपयोगोऽष्टविध । तद्यथा । मतिज्ञानोपयोग. श्रुतज्ञानोपयोगोऽवधिज्ञानोपयोगो मन.पर्यायज्ञानोपयोग केवलज्ञानोपयोगो मत्यज्ञानोपयोगः श्रुताज्ञानोपयोगो विभङ्गज्ञानोपयोग इति । दर्शनोपयोगश्चतुर्भेद. । तद्यथा । चक्षुर्दर्शनोपयोगोऽचक्षुर्दर्शनोपयोगोऽवधिदर्शनोपयोगः केवलदर्शनोपयोग इति ॥ ९ ॥

ससारिणो मुक्ताश्च ॥ १० ॥

ते जीवा समासतो द्विविधा भवन्ति ससारिणो मुक्ताश्च ॥ १० ॥

किं चान्यत्—

---

१ एत इति प्रतिपद यउद्दिष्टा(२।१)औपशमिकादय पञ्चैवान्यूनाधिका भावा पर्यायान्तराण्यात्मनस्त्रिपञ्चाशद्भेदा भवन्ति । आत्मन स्वतत्त्व द्विनवाष्टादिसूत्रेण (२।२) सख्या प्राक् नियता सैवानेनोपसहृतेति । एते च भावविकल्पा जीवाना यथासम्भवमायोज्या न सर्वे सर्वेषामिति । क्षायिकपारिणामिकावेव सिद्धानाम् । औपशमिकवर्ज्या नार कतिर्यग्योनीनाम् । देवमनुष्याणा पञ्चापि । न त्वौपशमिकक्षायिके सम्यक्त्वचारित्रे वा युगपद्भवत इति ।

समनस्कामनस्काः ॥ ११ ॥

समासतस्ते एव जीवा द्विविधा भवन्ति समनस्काश्च अमनस्काश्च । तान्परस्ताद्वक्ष्याम[1] ॥ ११ ॥

संसारिणस्त्रसस्थावरा ॥ १२ ॥

संसारिणो जीवा द्विविधा भवन्ति त्रसा[2] स्थावराश्च[3]॥१२॥ तत्र —

पृथिव्यब्वनस्पतयः स्थावराः ॥ १३ ॥

पृथिवीकायिका अप्कायिका वनस्पतिकायिका इत्येते त्रिविधा स्थावरा जीवा भवन्ति । तत्र पृथिवीकायोऽनेकविध शुद्धपृथिवीशर्करावालुकादिः । अप्कायोऽनेकविधो हिमादि । वनस्पतिकायोऽनेकविध शैवालादिः ॥ १३ ॥

तेजोवायू द्वीन्द्रियादयश्च त्रसाः ॥ १४ ॥

तेज कायिका अङ्गारादय । वायुकायिका उत्कलिकादय[4]। द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रिया पञ्चेन्द्रिया इत्येते त्रसा भवन्ति । संसारिणस्त्रसा स्थावरा इत्युक्ते एतदुक्तं भवति मुक्ता नैव त्रसा नैव स्थावरा इति ॥ १४ ॥

पञ्चेन्द्रियाणि ॥ १५ ॥

पञ्चेन्द्रियाणि भवन्ति । आरम्भो नियमार्थं षडादिप्रतिषे

---

१ मनसा सहित समनस्कम् ( २–२५ ) ।

२ त्रसन्ति अभिसन्धिपूर्वक वा ऊर्ध्वमधस्तिर्यग्ु चलन्तीति त्रसा । त्रसा द्विविधा सूक्ष्मत्रसस्थूलत्रसभेदन । त्रसनामकर्मोदयात् चरन्ति गच्छन्ति ते सूक्ष्मत्रसा । स्थावरनामकर्मोदयात् ये चरन्ति गच्छन्ति ते स्थूलत्रसा ।

३ तिष्ठन्तीति स्थावर ।

४ 'उक्कलिया मण्डलिया गुञ्जा घणवायसुद्धवाया य । बायरवाउविहाणा पञ्चविहा वण्णिया एए ॥ १ ॥' ( आचाराङ्गश्रु स्क १ अ १ उ ७ ) स्थित्वा स्थित्वा उत्कलिकाभिर्या वाति स उत्कलिकावात । मण्डलिकावातस्तु वातोल्मीरूप । गुञ्जा भ्रमा तद्वत् गुञ्जनीयो याति स गुञ्जावात । घनवातोऽत्यन्तघन पृथिव्याद्याधार तया व्यवस्थितो हिमपटलकल्पो मन्दस्तिमित शीतकालादिषु शुद्धवात ।

५ उपात्तेन्द्रियपञ्चकव्यतिरेकेण यावन्ति परैरभ्युपेयन्ते सर्वेषामत्र प्रतिषेध ।

धार्थश्च । इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिति वा । इन्द्रो जीव सर्वद्रव्येष्वैश्वर्ययोगाद्विषयेषु वा परमैश्वर्ययोगात् । तस्य लिङ्गमिन्द्रियं लिङ्गनात्सूचनात्प्रदर्शनादुपष्टम्भनाद्व्यञ्जनाच्च जीवस्य लिङ्गमिन्द्रियम् ॥ १५ ॥

द्विविधानि ॥ १६ ॥

द्विविधानीन्द्रियाणि भवन्ति । द्रव्येन्द्रियाणि भावेन्द्रियाणि च ॥ १६ ॥

तत्र—

निर्वृत्त्युपकरणे द्रव्येन्द्रियम् ॥ १७ ॥

निर्वृत्तीन्द्रियमुपकरणेन्द्रियं च द्विविधं द्रव्येन्द्रियम् । निर्वृत्तिरङ्गोपाङ्गनामनिर्वर्तितानीन्द्रियद्वाराणि कर्मविशेषसंस्कृताः शरीरप्रदेशाः । निर्माणनामाङ्गोपाङ्गप्रत्यया मूलगुणनिर्वर्तनेत्यर्थः । उपकरणं बाह्यमभ्यन्तरं च । निर्वर्तितस्यानुपघातानुग्रहाभ्यामुपकारीति ॥१७॥

लब्ध्युपयोगौ भावेन्द्रियम् ॥ १८

लब्धिरुपयोगश्च भावेन्द्रियं भवति । लब्धिर्नाम गतिजात्यादिनामकर्मजनिता तदावरणीयकर्मक्षयोपशमजनिता चेन्द्रियाश्रयकर्मोदयनिर्वृत्ता च जीवस्य भवति । सा पञ्चविधा । तद्यथा । स्पर्शनेन्द्रियलब्धिः रसनेन्द्रियलब्धिः घ्राणेन्द्रियलब्धिः चक्षुरिन्द्रियलब्धिः श्रोत्रेन्द्रियलब्धिरिति ॥ १८ ॥

---

१ "इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा" इति पाणिनिसूत्रम् ५-२-९३ ।

उपयोग स्पर्शादिपु ॥ १९ ॥

स्पर्शादिपु मतिज्ञानोपयोग इत्यर्थः[1] । उक्तमेतदुपयोगो लक्षणम् । उपयोगः प्रणिधानमायोगस्तद्भावः परिणाम इत्यर्थः । एषां च सत्या निर्वृत्तावुपकरणोपयोगौ भवतः । सत्यां च लब्धौ निर्वृत्त्युपकरणोपयोगा भवन्ति । निर्वृत्त्यादीनामेकतराभावे विषयालोचन न भवति ॥ १९ ॥

अत्राह । उक्त भवता पञ्चेन्द्रियाणीति । तत्कानि तानीन्द्रियाणीत्युच्यते—

स्पर्शनरसनघ्राणचक्षु श्रोत्राणि ॥ २० ॥

स्पर्शन रसन घ्राणं चक्षु श्रोत्रमित्येतानि पञ्चेन्द्रियाणि ॥२०॥

स्पर्शरसगन्धवर्णशब्दास्तेषामर्थाः ॥ २१ ॥

एतेषामिन्द्रियाणामेते स्पर्शादयोऽर्था भवन्ति यथासङ्ख्यम् ॥२१॥

श्रुतमनिन्द्रियस्य ॥ २२ ॥

श्रुतज्ञान द्विविधमनेकद्वादशविध[2] नोइन्द्रियस्यार्थः[3][4] ॥ २२ ॥

अत्राह । उक्त भवता पृथिव्यब्वनस्पतितेजोवायवो द्वीन्द्रियादयश्च नव जीवनिकाया । पञ्चेन्द्रियाणि चेति । तत्किं कस्येन्द्रियमिति । अत्रोच्यते —

वाय्वन्तानामेकम् ॥ २३ ॥

पृथिव्यादीनां वाय्वन्ताना जीवनिकायानामेवेन्द्रिय सूलक्रमप्रामाण्यात्प्रथम स्पर्शनमेवेत्यर्थ ॥ २३ ॥

---

१ अ २ सू ८

२ अङ्गबाह्य, अङ्गान्तरगत च । आद्य–आवश्यकाद्यनेकभेदम् । द्वितीय–आचाराङ्गादिद्वादशभेदम् ।

३ नोइन्द्रियस्य मनस ।

४ अर्थ –विषय ।

कृमिपिपीलिकाभ्रमरमनुष्यादीनामेकैकवृद्धानि ॥ २४ ॥

कृम्यादीनां पिपीलिकादीनां भ्रमरादीनां मनुष्यादीनां च यथासङ्ख्यमेकैकवृद्धानीन्द्रियाणि भवन्ति यथाक्रमम् । तद्यथा । कृम्यादीनामपादिक–नूपुरक–गण्डूपद–शङ्ख–शुक्तिका–शम्बूका–जलौका–प्रभृतीनामेकेन्द्रियेभ्यः पृथिव्यादिभ्य एकेन वृद्धे स्पर्शनरसनेन्द्रिये भवतः । ततोऽप्येकेन वृद्धानि पिपीलिका–रोहिणिका–उपचिका–कुन्थु–तुबुरक–त्रपुसबीज–कर्पासास्थिका–शतपद्युत्पतक–तृणपत्र–काष्ठहारकप्रभृतीनां त्रीणि स्पर्शनरसनघ्राणानि । ततोऽप्येकेन वृद्धानि भ्रमर–वटर–सारङ्ग–मक्षिका–दंश–मशक–वृश्चिक–नन्द्यावर्त–कीट–पतङ्गादीनां चत्वारि स्पर्शनरसनघ्राणचक्षूंषि । शेषाणां च तिर्यग्योनिजानां मत्स्योरगभुजङ्गपक्षि–चतुष्पदानां सर्वेषां च नारकमनुष्यदेवानां पञ्चेन्द्रियाणीति ॥ २४ ॥

अत्राह । उक्तं भवता द्विविधा जीवाः । समनस्का अमनस्काश्चेति । तत्र के समनस्का इति । अत्रोच्यते—

संज्ञिनः समनस्काः ॥ २५ ॥

सम्प्रधारणसंज्ञायां संज्ञिनो जीवाः समनस्का भवन्ति । सर्वे नारकदेवा गर्भव्युत्क्रान्तयश्च मनुष्यास्तिर्यग्योनिजाश्च केचित् ॥ ईहापोहयुक्ता गुणदोषविचारणात्मिका सम्प्रधारणसंज्ञा । तां प्रति

---

१ अत प्रभृतिसूत्रसमाप्तिपर्यन्तं ग्रन्थं श्रीहेमचन्द्राचार्यैः प्रमाणमीमांसायां किंचिद्भेदेन शब्दशः संगृहीतः ( पृ २८।२९ ) अपादिकादयो जन्तवः सम्प्रदायप्रसिद्ध्यनुसारं ज्ञातुं शक्याः । कोशादिष्वेषां शब्दानामनुपलम्भात् ।

२ सज्ञानं संज्ञा भूतभवद्भाविभावस्वभावपर्यालोचनम् । मानसक्रियाविशेषो वा सा विद्यते यस्य स संज्ञी । किं च ह्यस्तने दिवसेऽहमेवमकार्षम् । श्वस्तने त्वेवमन्यथा वा करिष्यामीति चिन्तनं सा दीर्घकालिकी संज्ञेत्युच्यते । द्वित्रिचतुरिन्द्रियाणां हि यद्यपि हेतुवादोपदेशिकसंज्ञया भवति वर्तमानकालिकस्मरणं तथापि ते ‘ दीनारमात्रेण कुतो धनवान् ’ इति न्यायादसंज्ञिन एव बोध्याः । अतीतानागतयोश्चिन्तनवैकल्यात् । अतो दीर्घकालिकसंज्ञयैव संज्ञितान्यवहारः । संज्ञा त्रिधा १ हेतुवादोपदेशिकी २ दीर्घकालिकी ३ दृष्टिवादोपदेशिकी चेति । अत्र तृतीया तु सम्यग्दर्शनवतामेव संज्ञिपञ्चेन्द्रियाणां भवति तदपेक्षया सर्वे मिथ्यात्विसंसारजीवा असंज्ञिन इत्युच्यमानाः स्युः ।

संज्ञिनो विवक्षिताः । अन्यथा ह्याहारभयमैथुनपरिग्रहसंज्ञाभिः सर्वे एव जीवाः संज्ञिन इति ॥ २५ ॥

विग्रहगतौ कर्मयोगः ॥ २६ ॥

विग्रहगतिसमापन्नस्य जीवस्य कर्मकृत एव योगो भवति । कर्मशरीरयोग इत्यर्थः । अन्यत्र तु यथोक्तः कायवाङ्मनोयोग इत्यर्थः ॥२६॥

अनुश्रेणि गतिः ॥ २७ ॥

सर्वा गतिर्जीवानां पुद्गलानां चाकाशप्रदेशानुश्रेणि भवति विश्रेणिर्न भवतीति गतिनियम इति ॥ २७ ॥

अविग्रहा जीवस्य ॥ २८ ॥

सिध्यमानगतिर्जीवस्य नियतमविग्रहा भवतीति ।

---

१ आहारसंज्ञा–आहाराभिलाषरूपः क्षुद्वेदनीयप्रभवः आत्मपरिणामविशेषः भयसंज्ञा–हीनसत्त्वतया मतिभयवार्ताश्रवणभीषणदर्शनादिजनिता बुद्धिस्तया तदर्थोपयोगेन इहलोकादिभयसप्तकापायपर्यालोचनेनेति । मैथुनसंज्ञा–मैथुनं संज्ञायतेऽनयेति मैथुनसंज्ञा पुंवेदोदयान्मैथुनाय स्त्र्यङ्गालोकनप्रसन्नवदनसंस्तम्भितोरुवेपथुप्रभृतिलक्षणा क्रिया । परिग्रहसंज्ञा–तीव्रलोभोदयात्परिग्रहाभिलाषः ।

२ गतिरन्तरालवर्तिनी द्विधा, ऋज्वी वक्री च, ऋज्वी तावत् पूर्वशरीरयोगोत्थापितप्रयत्नविशेषादेव गतिरिष्यते । धनुर्विमोक्षाहितसंस्कारेषुगमनवत् । तस्यां न पृथक् स एव योगो वाच्यः । अतोऽन्यस्यानुविग्रहगतौ कर्मयोगः विग्रहो वक्रमुच्यते, विग्रहेण युक्ता गतिर्विग्रहगतिः । विग्रहप्रधाना वा गतिर्विग्रहगतिः । तस्यां विग्रहगतौ कर्माष्टकेनैव योगो न शेषौदारिकादिकायवाङ्मनोव्यापार इति ।

३ कार्मणशरीरकृतैव चेष्टेत्यर्थः । अ २ सू ४१, अ ८ सू ११

४ कर्मैव शरीरं कार्मणम् ।

५ अयं च नियमोऽन्तर्गतेरेव क्रियते न कार्मणस्येति ख्यापयन्नाह–अन्यत्र तु यथोक्त 'कायवाङ्मनोयोग'- इति । अन्तर्गतेरन्यत्र यथाभिहित आगमे कायादियोगो भवति । तुशब्दो गत्यन्तरविशेषप्रदर्शनपरतयोक्तः । तद्यथा नारकगर्भव्युत्क्रान्तितिर्यग्मनुष्यदेवानां त्रयोऽपि योगाः समूर्च्छनजन्मनां तिर्यग्मनुष्याणां कायवाग्योगावेव ।

६ आकाशप्रदेशानुश्रेणिरूपेण जीवपुद्गलानां या गतिः । तद्रूपत्वम्–अनुश्रेणिगतेर्लक्षणम् । आकाशप्रदेशपङ्क्त्यनुसारेण गमनरूपत्वं वा । उक्तलक्षणायाः श्रेणेर्विगतो या गतिः सा विश्रेणिर्जीवानाम् ।

७ ऋजुगतिका ।

विग्रहवती च ससारिण: प्राक् चतुर्भ्य: ॥ २९ ॥

जात्यन्तरसक्रान्तौ ससारिणो जीवस्य विग्रहवती चाविग्रहा च गतिर्भवति उपपातक्षेत्रवशात्[1] । तिर्यगूर्ध्वमधश्च प्राक् चतुर्भ्य इति। येपा विग्रहवती तेपा विग्रहा प्राक् चतुर्भ्यो भवन्ति । अविग्रहा एकविग्रहा द्विविग्रहा त्रिविग्रहा इत्येताश्चतु.समयपराश्च-तुर्विधा गतयो भवन्ति[2] । परतो न सभवन्ति । प्रतिघाताभावाद्वि-[3]ग्रहनिमित्ताभावाच्च । विग्रहो वक्रित विग्रहोऽवग्रह' श्रेण्यन्तरस क्रान्तिरित्यनर्थान्तरम् । पुद्गलानामप्येवमेव ॥ २९ ॥

शरीरिणां च जीवाना विग्रहवती चाविग्रहवती च प्रयोग-परिणामवशात्। न तु तत्र विग्रहनियम इति। अत्राह । अथ विग्रहस्य किं परिमाणमिति । अत्रोच्यते । क्षेत्रतो[4] भाज्यम् । कालतस्तु—

---

१ उपपातक्षेत्र यत्र जन्म प्रतिपत्स्यते तस्य वश आनुलोम्यमनुकूलता । तस्मात्कारणात् ।

२ यस्योपपातक्षेत्र समश्रेणिव्यवस्थितमुत्पित्सो प्राणिन स ऋज्वायता श्रेणिम नुत्पत्योत्पद्यते तत्रैकेन समयेन वक्रमकुर्वाण कदाचित्तदेवोपपातक्षेत्र विश्रेणिस्थ भवति । तदैकविग्रहा द्विविग्रहा त्रिविग्रहा चति तिस्रो गतयो निष्पद्यन्ते । आकाशप्रदेशश्रेणी र्लिङ्घित्वा प्रत्यक्षीक्रियन्ते ।

३ सिद्ध्यमानगतेरेव प्रतिघाताभाव । प्रतिघातक हि कर्म तदभावादित्यर्थ । तथा जन्तुना एकविग्रहया गत्या यत्स्थान यातव्य तदसौ समयद्वयेनैव प्राप्नोति । उप पातक्षेत्रवशात् न ततोऽपि श्रेण्यन्तरमाक्रामयतीत्यतो विग्रहनिमित्ताभावादुच्यते । विग्रह-निमित्त उपपातक्षेत्रवश । इत्येव द्विविग्रहयोर्योजनीयम् ।

४ क्षेत्रापेक्षया ।

एकसमयोऽविग्रह. ॥ ३० ॥

एकसमयोऽविग्रहो भवति । अविग्रहा गतिरालोकान्तादप्येकेन समयेन भवति । एकविग्रहा द्वाभ्याम् । द्विविग्रहा त्रिभिः । त्रिविग्रहा चतुर्भिरिति । अत्र भङ्गप्ररूपणा कार्येति ॥ ३० ॥

एकं द्वौ वानाहारकः ॥ ३१ ॥

विग्रहगतिसमापन्नो जीव एक वा समय द्वौ वानाहारको भवति । शेष कालमनुसमयमाहारयति । कथमेक द्वौ वानाहारको न बहूनीत्यत्र भङ्गप्ररूपणा कार्या ॥ ३१ ॥

अत्राह । एवमिदानीं भवक्षये जीवोऽविग्रहया विग्रहवत्या वा गत्या गतः कथ पुनर्जायत इति । अत्रोच्यते । उपपातक्षेत्र स्वकर्मवशात्प्राप्त शरीरार्थं पुद्गलग्रहण करोति । सकषायत्वाज्जीव' कर्मणो योग्या-

---

१ भवान्तरालवर्तिन्यां जन्तोर्गतिपरिणतस्यैकेन समयेनातिक्रान्तेन वक्रा गति जायत इति ।

२ ऋज्वी गति क्षेत्रमङ्गीकृत्य कदाचिदव्यवहितश्रेण्यन्तरमात्र एव विरमति जन्तोरुत्पादवशात् । कदाचिच्छ्रेणिद्वयमतिक्रम्योपरमत्यालोकान्ताद्वा सिद्ध्यमानस्य भवतीत्येकसमयपरिमाणमभेदवर्ति, सर्वत्र गतिविशेषात् ।

३ एको विग्रहो यस्या सैकविग्रहा पूर्वापरसमयावधिकत्वात् विग्रहस्य साम र्थ्यान्निश्चीयते द्वाभ्या समयाभ्या निष्पाद्यत एकविग्रह इति । एवं द्वित्रिविग्रहयोरपि वाच्यम् ।

४ अत्रैवाविधे विचारप्रस्तावे भङ्गा विकल्पास्तेषा प्ररूपणा विभावना कार्या । सा चैव कार्या । नारका कदाचित्सर्व एव विग्रहगतयो भवन्ति । अथवा अविग्रह गतयश्च विग्रहगतिश्चैक स्यात । अथवा अविग्रहगतयो विग्रहगतयश्चेति ।

५ औदारिकादिपुद्गलानामादानरूपत्वमाहारस्य लक्षणम् । तादृगाहाराभावरूपत्व मनाहारस्य लक्षणम् । तद्वाश्चानाहारक । विग्रहगतिसमापन्नो जीव सामर्थ्याद्विग्रहापेक्ष- त्वात् द्विविग्रहा त्रिविग्रहा वानुप्राप्तो गृह्यते तत्र द्विविग्रहायामेक समय मध्यम त्रिविग्रहाया द्वौ समयावनाहारको मध्यमौ भवति ।

न्पुद्गलानादत्त इति । कायवाङ्मन प्राणापानाः पुद्गलानामुपकारः । नामप्रत्ययाः सर्वतो योगविशेषादिति वक्ष्यामः । तज्जन्म । तच्च त्रिविधम् । तद्यथा—

सम्मूर्छनगर्भोपपाता जन्म ॥ ३२ ॥

सम्मूर्छनं गर्भ उपपात इत्येतत्त्रिविध जन्म ॥ ३२ ॥

सचित्तशीतसंवृत्ताः सेतरा मिश्राश्चैकशस्तद्योनय ॥३३॥

संसारे जीवानामस्य त्रिविधस्य जन्मन एताः सचित्तादय. सप्रतिपक्षा मिश्राश्चैकशो योनयो भवन्ति । तद्यथा । सचित्ता अचित्ता सचित्ताचित्ता शीता उष्णा शीतोष्णा संवृता विवृता

---

१ अ ८ सू २५

२ गर्भसामग्रीं विना समुद्भूतत्वरूपत्व सम्मूर्छनस्य लक्षणम् । लोकत्रये यथायोग देहावयवविरचनरूपत्व वा ।

३ शुक्रशोणितसमीलनाधारप्रदेशवत्त्व गर्भस्य लक्षणम् ।

४ क्षेत्रप्राप्तिमात्रनिमित्तक यज्जन्म तद्रूपत्वम् । गर्भसम्मूर्छनप्रकाररहित्येन जायमानत्व वा ।

५ "यु" मिश्रणे, युवन्ति तैजसकार्मणशरीरवन्त सन्त औदारिकादिशरीर प्रायोग्यपुद्गलस्कन्धसमुदयेन मिश्रीभवन्त्यस्यामिति योनिरुत्पत्तिस्थानम् ।

६ जीवप्रदेशैः सहान्योन्यानुगमस्वीकृतजीवदेहादिरूप यज्जन्तूत्पत्तिस्थान तत् सचित्ताया लक्षणम् । जीवप्रदेशै सम्बन्धरूपत्व वा ।

७ शुष्ककाष्ठादिरूप यज्जन्तूत्पत्तिस्थान तत् । सर्वथा जीवप्रदेशसम्बन्धरहितत्व वा अचित्ताया लक्षणम् ।

८ उभयसम्बन्धरहितत्व सचित्ताचित्तालक्षणम् ।

९ शीतस्पर्शवत्त्वे सति जन्तूत्पत्तिस्थानत्व शीतयोनेर्लक्षणम् ।

१० उष्णस्पर्शवत्त्वे सति जन्तूत्पत्तिस्थानरूपत्वमुष्णयोनेर्लक्षणम् ।

११ शीतोष्णपरिणामत्वे सति जन्तूत्पत्तिस्थानरूपत्व शीतोष्णयोनेर्लक्षणम् ।

१२ दिव्यशय्यादिवद्वस्त्राद्यावृतस्थानरूपत्व संवृतयोनेर्लक्षणम् । जन्तूत्पत्त्याधारवत्त्वे सति अनुपलक्ष्यमाणस्थानविशेषरूपत्व वा ।

१३ जन्तूत्पत्त्याधारवत्त्वे सति स्पष्टमुपलक्ष्यमाणस्थानविशेषरूपत्व विवृतयोनेर्लक्षणम् ।

सद्वृत्ताविवृत्ता इति। तत्र देवनारकानामचित्ता योनिः। गर्भजन्मनां मिश्रा। त्रिविधान्येषाम्। गर्भजन्मनां देवानां च शीतोष्णा। तैजसकायस्योष्णा। त्रिविधान्येषाम्। नारकैकेन्द्रियदेवानां सद्वृत्ता। गर्भजन्मनां मिश्रा विवृत्तान्येषामिति ॥ ३३ ॥

जराय्वण्डपोतजानां गर्भः ॥ ३४ ॥

जरायुजानां मनुष्य-गो-महिषाजाविकाश्व खरोष्ट्र-मृग चमर वराह-गवय सिंह-व्याघ्रर्क्ष-द्वीपि-श्व शृगाल मार्जारादीनाम्। अण्डजाना सर्प-गोधा-कृकलाश-गृहकोकिलिकामत्स्य-कूर्म-नक्र शिशुमारादीनां पक्षिणां च लोमपक्षाणां हंस चाष-शुक-गृध्र श्येन पारावत-काक-मयूर-मद्गु-बक-बलाकादीनाम्। पोतजाना शल्लक-हस्ति श्वाविल्लापक शश शारिका-नकुल-मूषिकादीनां पक्षिणां च चर्मपक्षाणां जलूका वल्गुलि भारण्ड-पक्षिविरालादीनां गर्भो जन्मेति ॥ ३४ ॥

नारकदेवानामुपपात ॥ ३५ ॥

नारकाणां देवानां चोपपातो जन्मेति ॥ ३५ ॥

शेषाणां सम्मूर्छनम् ॥ ३६ ॥

जराय्वण्डपोतजनारकदेवेभ्य शेषाणां सम्मूर्च्छनं जन्म।

---

१ बहिर्दृश्यमन्यदृश्यमध्य जन्तूत्पत्तिस्थान सवृत्तविवृत्तालक्षणम्।

२ जालवत् प्राणिपरिवरणरूपत्व सति विततमांसशोणितरूपत्व जरायोर्लक्षणम्। तत्र जाता जरायुजा।

३ चमरो नामारण्यो गौ।

४ ऋक्ष —भल्लूक।

५ द्वीपी—व्याघ्रविशेष।

६ नखत्वक्सदृशोपात्तकाठिन्य सति शुक्रशोणितपरिवरणरूप य मण्डल तद्रूपत्व मण्डस्य। तत्र जाता अण्डजा।

७ शिशुमार –मत्स्यविशेष।

८ पोता एव जाता पोतजा शुद्धप्रसवा न जराय्वादिना वेष्टिता।

उभयावधारण चात्र भवति । जरायुजादीनामेव गर्भ । गर्भ एव जरायुजादीनाम् । नारकदेवानामेवोपपात । उपपात एव नारकदेवानाम् । शेषाणामेव सम्मूर्छनम् । सम्मूर्छनमेव शेषाणाम् ॥ ३६ ॥

औदारिकवैक्रियाहारकतैजसकार्मणानि शरीराणि ॥ ३७ ॥

औदारिक वैक्रिय आहारक तैजस कार्मणमित्येतानि पञ्च शरीराणि ससारिणा जीवाना भवन्ति ॥ ३७ ॥

तेषा पर पर सूक्ष्मम् ॥ ३८ ॥

तेषामौदारिकादिशरीराणां पर पर सूक्ष्म वेदितव्यम् । तद्यथा । औदारिकाद्वैक्रियं सूक्ष्मम् । वैक्रियादाहारकम् । आहारकात्तैजसम् । तैजसात्कार्मणमिति ॥ ३८ ॥

प्रदेशतोऽसङ्ख्येयगुण प्राक् तैजसात् ॥ ३९ ॥

तेषा शरीराणा पर परमेव प्रदेशतोऽसङ्ख्येयगुण भवति प्राक् तैजसात् । औदारिकशरीरप्रदेशेभ्यो वैक्रियशरीरप्रदेशा असङ्ख्येयगुणाः । वैक्रियशरीरप्रदेशेभ्य आहारकशरीरप्रदेशा असङ्ख्येयगुणा इति ॥ ३९ ॥

अनन्तगुणे परे ॥ ४० ॥

परे द्वे शरीरे तैजसकार्मणे पूर्वत पूर्वत[1] प्रदेशार्थतयानन्तगुणे भवत. । आहारकात्तैजस प्रदेशतोऽनन्तगुणम् । तैजसात्कार्मणमनन्तगुणमिति ॥ ४० ॥

अप्रतिघाते ॥ ४१ ॥

एते द्वे शरीरे तैजसकार्मणे अन्यत्र लोकान्तात्सर्वत्राप्रतिघाते भवतः ॥ ४१ ॥

---

१ अ २ सू. ४१

## अनादिसम्बन्धे च ॥ ४२ ॥

ताभ्यां तैजसकार्मणाभ्यामनादिसम्बन्धो जीवस्येत्यनादि-सम्बन्ध इति ॥ ४२ ॥

## सर्वस्य ॥ ४३ ॥

सर्वस्य चैते तैजसकार्मणे शरीरे ससारिणो जीवस्य भवत.। एके त्वाचार्या नयवादापेक्ष व्याचक्षते। कार्मणमेवैकमनादिसम्बन्धम्। तेनैवैकेन जीवस्यानादि[1] सम्बन्धो भवतीति। तैजस तु लब्ध्यपेक्ष भवति। सा च तैजसलब्धिर्न सर्वस्य कस्यचिदेव भवति। क्रोध-प्रसादनिमित्तौ शापानुग्रहौ प्रति तेजोनिसर्गशीतरश्मिनिसर्गकरं[2] तथा भ्राजिष्णुप्रभासमुदयच्छायानिर्वर्तकं[3] तैजस शरीरेषु मणिज्वलनज्योतिष्कविमानवदिति[4] ॥ ४३ ॥

## तदादीनि भाज्यानि युगपदेकस्याचतुर्भ्यः ॥ ४४ ॥

ते आदिनी एषामिति तदादीनि। तैजसकार्मणे यावत्संसार-

१ तुशब्दोऽवधारक । तैजस लब्ध्यपेक्षमेव भवति सन्नामासादयति। सा च तैजसलब्धिर्विशिष्टतपोऽनुष्ठानादिभि साधनै कस्यचिदेव भवति न सर्वस्य जन्तोस्तत्सा धनकलापविमुखस्य। स च तद्योग्यसाधनसमासादिततेजोलब्धिस्तेजोनिसर्गमातनोति।

२ क्रोधनिमित्तशापप्रदानाभिमुख उष्णतेजोनिसर्गं करोति। प्रसादनिमित्तानु-ग्रहाभिमुख शीतरश्मिनिसर्गकरो भवति। शीता रश्मयो यस्य निसृज्यमाने तेजोवि शेषस्य स शीतरश्मि शीतरश्मिश्चासौ निसर्गश्च शीतरश्मिनिसर्गस्तत्करणशील शीत रश्मिनिसर्गकर तैजसम्।

३ भ्राजनशीलो भ्राजिष्णु प्रभाणा समुदयस्तस्य छाया आभा भ्राजिष्णुप्रभा समुदयच्छाया। तस्याश्छायानिवर्तकमुत्पादक तैजस शरीरेष्वौदारिकादिकेषु केषुचित्।

४ यथा हि मणय स्फटिकाङ्कवैडूर्यादयो भ्राजिष्णुछायाविमलपुद्गलारब्धत्वाज्ज्वलनो वा निरस्तप्रत्यासन्नतिमिरमात प्रद्योतते स्वतेजसा ज्योतिष्कदेवाना वा चन्द्रादित्यादीना विमानान्यतिभास्वराणि निर्मलद्रव्यारब्धत्वात्तथा तैजसशरीरापेक्षमौदारिकादिषु शरीरेषु केषुचिदेव स्फुरन्मयूखजालमुपलभ्यते न सर्वेषु। अन्यथा तदभावात्।

भाविनी आदिं कृत्वा शेषाणि युगपदेकस्य जीवस्य भाज्यान्याचतुर्भ्य. । तद्यथा । तैजसकार्मणे वा स्याताम् । तैजसकार्मणौदारिके वा स्यु. । तैजसकार्मणवैक्रियाणि वा स्यु॰ । तैजसकार्मणौदारिकवैक्रियाणि वा स्यु । तैजसकार्मणौदारिकाहारकाणि वा स्यु॰। कार्मणमेव वा स्यात् । कार्मणौदारिके वा स्याताम् । कार्मणवैक्रिये वा स्याताम् । कार्मणौदारिकवैक्रियाणि वा स्यु॰। कार्मणौदारिकाहारकाणि वा स्यु । कार्मणतैजसौदारिकवैक्रियाणि वा स्यु. । कार्मणतैजसौदारिकाहारकाणि वा स्यु । न तु कदाचिद्युगपत्पञ्च भवन्ति । नापि वैक्रियाहारके युगपद्भवत. स्वामिविशेषादिति वक्ष्यते ॥ ४४ ॥

## निरुपभोगमन्त्यम् ॥ ४५ ॥

अन्त्यमिति सूत्रक्रमप्रामाण्यात्कार्मणमाह । तन्निरुपभोगम् । न सुखदु.खे तेनोपभुज्येते न तेन कर्म बध्यते न वेद्यते नापि निर्जीर्यत इत्यर्थः । शेषाणि तु सोपभोगानि । यस्मात्सुखदु॰खे तैरुपभुज्येते कर्म बध्यते वेद्यते निर्जीर्यते च तस्मात्सोपभोगानीति ॥४५॥

अत्राह । एषा पञ्चानामपि शरीराणा सम्मूर्छनादिषु त्रिषु जन्मसु किं क जायत इति । अत्रोच्यते—

## गर्भसम्मूर्छनजमाद्यम् ॥ ४६ ॥

आद्यमिति सूत्रक्रमप्रामाण्यादौदारिकमाह । तद्गर्भे सम्मूर्छने वा जायते ॥ ४६ ॥

## वैक्रियमौपपातिकम् ॥ ४७ ॥

वैक्रियशरीरमौपपातिकं भवति । नारकाणा देवानां चेति ॥ ४७ ॥

---

१ अ २ सू ४७,४९

२ अनुभूयमानमवेह निर्जीर्यते । निरसतामापद्यमान परिशाट्यमप्रदन्नोप्य पादस्पृष्टनामुक्त रसद्ग्रुम्मक निर्जीणमुच्यते ।

लब्धिप्रत्ययं च ॥ ४८ ॥

लब्धिप्रत्ययं च वैक्रियशरीरं भवति। तिर्यग्योनीनां मनुष्याणां चेति ॥ ४८ ॥

शुभं विशुद्धमव्याघाति चाहारकं चतुर्दशपूर्वधरस्यैव ॥४९॥

शुभमिति शुभद्रव्योपचितं शुभपरिणामं चेत्यर्थः । विशुद्धमिति विशुद्धद्रव्योपचितमसावद्यं चेत्यर्थः । अव्याघातीति आहारकं शरीरं न व्याहन्ति न व्याहन्यते चेत्यर्थः । तच्चतुर्दशपूर्वधर एव कस्मिंश्चिदर्थे कृच्छ्रेऽत्यन्तसूक्ष्मे सन्देहमापन्नो निश्चयाधिगमार्थं क्षेत्रान्तरितस्य भगवतोऽर्हतः पादमूलमौदारिकेण शरीरेणाशक्यगमनं मत्वा लब्धिप्रत्ययमेवोत्पादयति दृष्ट्वा भगवन्तं छिन्नसंशयः पुनरागत्य व्युत्सृजत्यन्तर्मुहूर्तस्य तैजसमपि शरीरं लब्धिप्रत्ययं भवति ॥

कार्मणमेषां निबन्धमाश्रयो भवति तत्कर्मत एव भवतीति बन्धे परस्ताद्वक्ष्यति । कर्म हि कार्मणस्य कारणमन्येषां च शरीराणामादित्यप्रकाशवत् । यथादित्यः स्वमात्मानं प्रकाशयत्यन्यानि च द्रव्याणि न चास्यान्यः प्रकाशकः । एवं कार्मणमात्मनश्च कारणमन्येषां च शरीराणामिति ।

---

१ तपोविशेषजनिता लब्धिस्तत्प्रत्ययं तत्कारणमेतच्छरीरं भवति । अनमजमिदमित्यर्थः ।

२ द्वादशाङ्गस्य दृष्टिवादाख्य ( दृष्टिपात ) महासमुद्रस्य पंच पदानि तद्यथा— परिकर्म १ सूत्र २ पूर्वानुयोग ३ पूर्वगत ४ चूलिका ५ । तत्र पूर्वगताख्यचतुर्थपदे चतुर्दश पूर्वाणि १ उत्पादम् २ अग्रायणीयम् ३ वीर्यप्रवादम् ४ अस्तिनास्तिप्रवादम् ५ ज्ञानप्रवादम् ६ सत्यप्रवादम् ७ आत्मप्रवादम् ८ कर्मप्रवादम् ९ प्रत्याख्यानप्रवादम् १० विद्याप्रवादम् ११ कल्याणम् १२ प्राणावायम् १३ क्रियाविशालम् १४ लोकबिन्दुसारम् । तानि धारणाज्ञानेनाप्यते इति चतुर्दशपूर्वधरः ।

३ आरम्भात्प्रभृत्या अपवर्गात् सर्वोऽन्तर्मुहूर्तपरिमाणः कालो भवति ।

४ अ ८ सू. १,२,३

अत्राह । औदारिकमित्येतदादीना शरीरसज्ञाना क. पदार्थ इति । अत्रोच्यते । उद्गतारमुदारम् । उत्कटारमुदारम् । उद्गम एव वोदारम् । उपादानात्प्रभृति अनुसमयमुद्गच्छति वर्धते जीर्यते शीर्यते परिणमतीत्युदारम् । उदारमेवौदारिकम् । नैवमन्यानि ॥ यथोद्गम वा निरतिशेष ग्राह्य छेद्य भेद्य दाह्य हार्यमित्युदारणादौदारिकम् । नैवमन्यानि उदारमिति च स्थूलनाम । स्थूलमुद्गत पुष्ट बृहन्महदित्युदारमेवौदारिकम् । नैव शेषाणि । तेषा हि पर पर सूक्ष्ममित्युक्तम् ॥

वैक्रियमिति । विक्रिया विकारो विकृतिर्विकरणमित्यनर्थान्तरम् । विविध क्रियते। एक भूत्वानेक भवति। अनेक भूत्वा एक भवति। अणु भूत्वा महद्भवति । महच्च भूत्वाणु भवति। एकाकृति भूत्वानेकाकृति भवति । अनेकाकृति भूत्वा एकाकृति भवति । दृश्य भूत्वादृश्य भवति । अदृश्य भूत्वा दृश्य भवति । भूमिचर भूत्वा खेचर भवति । खेचर भूत्वा भूमिचर भवति । प्रतिघाति भूत्वाप्रतिघाति भवति । अप्रतिघाति भूत्वा प्रतिघाति भवति । युगपच्चैतान् भावाननुभवति । नैव शेषाणीति । विक्रियाया भवति विक्रियायां जायते विक्रियायां निर्वर्त्यते विक्रियैव वा वैक्रियम् ।

आहारकम् । आह्रियत इति आहार्यम् । आहारकमन्तर्मुहूर्त स्थिति । नैव शेषाणि ॥

तेजसो विकारस्तैजस तेजोमय तेज स्वतत्त्व शापानुग्रहमयोजनम् । नैव शेषाणि ।

कर्मणो विकार कर्मात्मक कर्ममयमिति कार्मणम् । नैव शेषाणि। एभ्य एव चार्थविशेषेभ्य शरीराणां नानात्वं सिद्धम् । किं

---

१ घटपटादीनामिव लक्षणभेदात् ।

चान्यत् । कारणतो विषयतः स्वामितः प्रयोजनतः प्रमाणतः प्रदेशसङ्ख्यातोऽवगाहनतः स्थितितोऽल्पबहुत्वत इत्येतेभ्यश्च नवभ्यो विशेषेभ्यः शरीराणां नानात्वं सिद्धमिति ॥ ४९ ॥

अत्राह । आसु चतसृषु संसारगतिषु को लिङ्गनियम इति । अत्रोच्यते । जीवस्यौदयिकेषु भावेषु व्याख्यायमानेषूक्तम् । त्रि-

१ स्थूलपुद्गलोपचितमूर्त्यौदारिकम् । न तथा वैक्रियादीनि । परं परं सूक्ष्ममिति ( २-३८ ) वचनात् ।

२ विद्याधरौदारिकशरीराणि प्रत्यानन्दीश्वरादौदारिकस्य विषयः जङ्घाचारण, प्रत्यारुचकवरपर्यन्तात्तिर्यगूर्ध्वमापाण्डुकवनात् । वैक्रियमसङ्ख्येयद्वीपसमुद्रविषयम् । आहारकस्य यावन्महाविदेहक्षेत्राणि तैजसकार्मणयोरामवगोत्रात् ।

३ औदारिकस्य मनुष्यतिर्यञ्चः । वैक्रियस्य देवनारकास्तिर्यङ्मनुष्याश्च केचित् । आहारकस्य चतुर्दशपूर्वधरमनुष्यसंयतः । तैजसकार्मणयोः सर्वसंसारिणः ।

४ औदारिकस्य धर्माधर्मसुखदुःखकेवलज्ञानावाप्त्यादि प्रयोजनं वैक्रियस्य स्थूलसूक्ष्मैकत्वव्योमचरक्षितिगतिविषयानेकलक्षणा विभूतिः । आहारकस्य तु सूक्ष्मव्यवहितदुरवगाहार्थव्यवस्थितिः । तैजसस्याहारपाकः शापानुग्रहदानसामर्थ्यं च । कार्मणस्य भवान्तरगतिपरिणामः ।

५ सातिरेकं योजनसहस्रमौदारिकम् । योजनलक्षप्रमाणं वैक्रियम् । रत्निप्रमाणमाहारकं लोकायामप्रमाणे तैजसकार्मणे ।

६ 'प्रदेशतोऽसङ्ख्येयगुणं प्राक्तैजसात्' 'अनन्तगुणे परे' इति प्रदेशभेद उक्तः ( २-३९,४० ) ।

७ सातिरेकयोजनसहस्रप्रमाणमौदारिकमसङ्ख्येयगुणप्रदेशेषु यावत्स्ववगाढं भवति तेभ्यो बहुतरकसङ्ख्येयप्रदेशावगाढं योजनलक्षप्रमाणं वैक्रियं भवति । आहारकमाभ्यामल्पप्रदेशावगाढं भवति हस्तमात्रत्वात् । तैजसकार्मणे लोकान्तायताकाशश्रेण्यावगाढे भवतः ।

८ औदारिकं जघन्येन अन्तर्मुहूर्तस्थिति । उत्कर्षेण त्रिपल्योपमस्थिति । वैक्रियं जघन्येनान्तर्मुहूर्तस्थिति । उत्कर्षेण त्रयस्त्रिंशत्सागरोपमस्थिति । आहारकमन्तर्मुहूर्तस्थित्येव । तैजसकार्मणयोः सन्तानानुरोधात् अनादित्वमपर्यवसानता चाभव्यसम्बन्धितया । अनादित्वं सपर्यवसानता च भव्यसम्बन्धित्वेन ।

९ सर्वस्तोकमाहारकम् । आहारकाद्वैक्रियशरीराण्यसङ्ख्येयगुणानि । वैक्रियशरीरेभ्य औदारिकशरीराण्यसङ्ख्येयगुणानि । औदारिकशरीरेभ्यस्तैजसकार्मणान्यनन्तगुणानि ।

विधमेव लिङ्गं स्त्रीलिङ्गं पुल्लिङ्गं नपुंसकलिङ्गमिति ॥ तथा चारित्र-मोहे नोकषायवेदनीये त्रिविध एव वेदो दृश्यते । स्त्रीवेदः पुंवेदो नपुंसकवेद इति ॥ तस्मात्त्रिविधमेव लिङ्गमिति ॥ तत्र—

## नारकसम्मूर्छिनो नपुंसकानि ॥ ५० ॥

नारकाश्च सर्वे सम्मूर्छिनश्च नपुंसकान्येव भवन्ति । न स्त्रियो न पुमांसः । तेषां हि चारित्रमोहनीयनोकषायवेदनीयाश्रयेषु त्रिषु वेदेषु नपुंसकवेदनीयमेवैकमशुभगतिनामापेक्षं पूर्वबद्धनिकाचितमुदय-प्राप्तं भवति नेतरे इति ॥ ५० ॥

## न देवाः ॥ ५१ ॥

देवाश्चतुर्निकाया अपि नपुंसकानि न भवन्ति । स्त्रियः पुमांसश्च भवन्ति । तेषां हि शुभगतिनामापेक्षे स्त्रीपुंवेदनीये पूर्वबद्धनिकाचिते उदयप्राप्ते द्वे एव भवतो नेतरत् । पारिशेष्याच्च गम्यते जराय्वण्डपोतजास्त्रिविधा भवन्ति स्त्रियः पुमांसो नपुंसकानीति ॥ ५१ ॥

अत्राह । चतुर्गतावपि संसारे किं व्यवस्थिता स्थितिरायुष उताकालमृत्युरप्यस्तीति । अत्रोच्यते । द्विविधान्यायूंषि । अपवर्त-नीयानि अनपवर्तनीयानि च । अनपवर्तनीयानि पुनर्द्विविधानि । सोपक्रमाणि निरुपक्रमाणि च । अपवर्तनीयानि तु नियतं सोप-क्रमाणीति ॥ तत्र—

---

१ कषायसहवर्तित्वात्कषायप्रेरणादपि । हास्यादिनवकस्योक्ता नोकषायकषायता । हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुंनपुंसकवेदा इति हास्यादयो नव ।

२–३ अ ८ सू १०

४ अ ४ सू ११,१२,१३,१७

५ नपुंसकवेदनीयमनद्धत्वात् ।

६ कारणान्तरादिन्निश्चितावधेः प्राक् यस्य आयुषः क्षयस्तदायुः अपवर्त्यं यम् ।

७ येनापि कारणेन ह्रासमनापद्यत् निश्चितकालावधि यदायुरवभोग्यतां याति तदनपवर्तनीयमुच्यते ॥

## औपपातिकचरमदेहोत्तमपुरुषासङ्ख्येयवर्षायुषोऽनपवर्त्यायुषः ॥५२॥

औपपातिकाश्चरमदेहा उत्तमपुरुषा असङ्ख्येयवर्षायुष इत्येतेऽनपवर्त्यायुषो भवन्ति । तत्रौपपातिका नारकदेवाश्चेत्युक्तम् । चरमदेहा मनुष्या एव भवन्ति नान्ये । चरमदेहा अन्त्यदेहा इत्यर्थः । ये तेनैव शरीरेण सिध्यन्ति । उत्तमपुरुषास्तीर्थकरचक्रवर्त्यर्धचक्रवर्तिनः । असङ्ख्येयवर्षायुषो मनुष्या तिर्यग्योनिजाश्च भवन्ति । सदेवकुरूत्तरकुरुषु सान्तरद्वीपकास्वकर्मभूमिषु कर्मभूमिषु च सुषमसुषमायां सुषमायां सुषमदुःषमायामित्यसङ्ख्येयवर्षायुषो मनुष्या भवन्ति । अत्रैव बाह्येषु द्वीपेषु समुद्रेषु तिर्यग्योनिजा असङ्ख्येयवर्षायुषो भवन्ति । औपपातिकाश्चासङ्ख्येयवर्षायुषश्च निरुपक्रमाः । चरमदेहाः सोपक्रमा निरुपक्रमाश्चेति । एभ्य औपपातिकचरमदेहासङ्ख्येयवर्षायुर्भ्यः शेषा मनुष्यास्तिर्यग्यो-

---

१ चक्रवर्तिन —भरतादय ।

२ अर्धचक्रवर्तिन —रामकृष्णप्रतिकृष्ण ।

३ सह देवकुरुभिरुत्तरकुरव सदेवकुरूत्तरकुरव तत्र देवकुरूत्तरकुरुषु जम्बुद्वीपधातकीखण्डपुष्करद्वीपार्धवर्तिषु ।

४ अ ३ सू १४,१५,१८

५ अकर्मभूमिषु—हैमवतहरिवर्षरम्यकहैरण्यवतारव्यासु जम्बूद्वीपधातकीखण्ड पुष्करवरद्वीपार्धवर्तिनीषु ।

६ कर्मणो भूमय । यत्र जाता प्राणिन सकल कर्म क्षपयित्वा सिध्यन्ति तीर्थकरोपदेशात्ता कर्मभूमयो भरतैरावतविदेहक्षेत्राणि पञ्चदश प्रत्येक पञ्चभेदत्वात् ।

७ अ ४ सू, १५

८ मनुष्यक्षेत्राद्बहिर्भूतेषु ।

९ न होषा प्राणापानाहारनिरोधाध्यवसाननिमित्तवेदनापराघातस्पर्शाख्या सप्त भेदना विशेषा सन्त्यायुषो भेदका उपक्रमा इत्यतो निरुपक्रमा एव ।

निजा सोपक्रमा निरुपक्रमाश्चापवर्त्यायुषोऽनपवर्त्यायुषश्च भवन्ति । तत्र येऽपवर्त्यायुषस्तेषां विषशस्त्रकण्टकाग्न्युदकाहिशिताजीर्णाशनिप्रपातोद्बन्धनश्वापदवज्रनिर्घातादिभिः क्षुत्पिपासाशीतोष्णादिभिश्च द्वन्द्वोपक्रमैरायुरपवर्त्यते । अपवर्तनं शीघ्रमन्तर्मुहूर्तात्कर्मफलोपभोगः उपक्रमोऽपवर्तननिमित्तम् ॥

अत्राह । यद्यपवर्तते कर्म तस्मात्कृतनाशः[1] प्रसज्यते यस्माच्च वेद्यते । अथास्त्यायुष्कं कर्म म्रियते च तस्मादकृताभ्यागमः प्रसज्यते । येन सत्यायुष्के म्रियते च ततश्चायुष्कस्य कर्मण आफल्यं प्रसज्यते । अनिष्टं चैतत् । एकभवस्थिति चायुष्कं कर्म न जात्यन्तरानुबन्धि तस्माच्चापवर्तनमायुषोऽस्तीति ॥ अत्रोच्यते[2] । कृतनाशाकृताभ्यागमाफल्यानि कर्मणो न विद्यन्ते । नाप्यायुष्कस्य जात्यन्तरानुबन्धः । किं तु यथोक्तैरुपक्रमैरभिहतस्य[3][4] सर्वसन्दोहेनोदयप्राप्तमायुष्कं कर्म शीघ्रं पच्यते[5] तदपवर्तनमित्युच्यते[6] । संहतशुष्कतृणराशिदहनवत्[7] । यथा हि संहतस्य शुष्कस्यापि तृणराशेरवयवशः क्रमेण दह्यमानस्य चिरेण दाहो भवति तस्यैव शिथिलप्रकीर्णोपचितस्य सर्वतो युगपदादीपितस्य पवनोपक्रमाभिहतस्याशु दाहो भवति तद्वत् । यथा

---

१ कृतनाश १ अकृताभ्यागम २ कर्मणा फल्याद्वित्य ३ चेति दोषत्रयमनेन पूर्वपक्षेण प्रतिपाद्यते ।

२ अनेन पूर्वोक्तदोषत्रय खण्ड्यते ।

३ अध्यवसानविषशस्त्रादिभि ।

४ अभिघातस्य ।

५ सर्वात्मना कार्त्स्न्येनेत्यर्थ ।

६ प्राप्तविपाकमाशु भवति । यत्तु तस्य क्रमभावी विपाक सोऽपवर्त्यते । अनुभव पुन सर्वस्य युगपत् निषिध्यते । इत्येषोऽपवर्तनशब्दार्थ ।

७ सहतत्वात्प्रशिथिलत्वादपि तृणपुञ्जश्चिराय दह्यते यदा तु शिथिलो भवत्यवयवशस्तदाशु भस्मसाद्भवति तद्वदायुषोऽप्यनुभव । यदायुर्दलसहितमतिघनतया बन्धकाल एव परिणाममासादित भवति घनश्लेषवत् । तत्क्रमेण वर्त्तमान चिराय वेद्यते ।

वा सङ्ख्यानाचार्यं करणलाघवार्थं गुणकारभागहाराभ्यां राशिं छेदादेवापवर्तयति न च सङ्ख्येयस्यार्थस्याभावो भवति तद्वदुपक्रमाभिहतो मरणसमुद्घातदुःखार्तः कर्मप्रत्ययमनाभोगयोगपूर्वकं करणविशेषमुत्पाद्य फलोपभोगलाघवार्थं कर्मापवर्तयति न चास्य फलाभाव इति ॥ किं चान्यत् । यथा वा धौतपटो जलार्द्र एव संहतश्चिरेण शोषमुपयाति स एव च वितानितः सूर्यरश्मिवाय्वभिहतः क्षिप्रं शोषमुपयाति न च संहते तस्मिन्प्रभूतस्नेहागमो नापि वितानितेऽकृत्स्नशोषः तद्वद्यथोक्तनिमित्तापवर्तनैः कर्मणः क्षिप्रं फलोपभोगो भवति । न च कृतप्रणाशाकृताभ्यागमाफल्यानि ॥

इति तत्त्वार्थाधिगमसूत्रेषु
द्वितीयोऽध्यायः समाप्तः॥

---

१ गणिताचार्य । गणितप्रक्रियायामाहितनैपुण्य ।

२ करणानि गुणकारभागहारापवर्तनोद्वर्तनादीनि । तत्र यो लघु करणोपाय स्वल्पफलस्तेन तत्फलमानयति गणिताभिज्ञत्वात् । तुल्येऽपि हि फलानयने गुणकारभागहारौ चिराय तत्फलं अभिनिर्वर्तयत । स पुनर्गणितनिपुणो गुणकारभागहाराभ्यां चिरकालकारिभ्यां सकाशात् करणलाघवार्थमपवर्तनार्हं राशिं छेदादेवार्थाधिकादपवर्तयति, पण्णवत्यादिकमनपवर्तनार्हं पुनर्लघुकरणाभिज्ञोऽपि न शक्नोत्येवापवर्तयितुमक्रम् । पञ्चाशदुत्तरसहस्रादिकं गुणकारभागहारक्रममेवाप्रयोजयति । न च सङ्ख्येयार्थस्याभावो भवति । फलभूतस्य करणविशेषे सत्यपि प्रेप्सितफलाभेदमादर्शयति ।

३ मरणसमुद्घातो नाम स्वशरीरकादात्मप्रदेशापकर्षः मूर्च्छानुगतश्चेतनाविमुक्त इवाव्यक्तप्रलापलक्षणोऽस्तमितमनोबलाद्विवार्ण चेष्टाक्रियाविशेष स एव चातिविरलमूलप्रदेशोत्पन्ननरूपत्वाद् स तेनार्तो विषण्ण विक्लव्यताविमुक्त ।

४ एतदुक्तं भवति । आजानान एव हि तदपवर्तनाकरणेन अपवर्तनार्हं कर्म अपवर्तयति । आहाररसादिवत्परिणामवत् । किमर्थं पुनरपवर्तयति । फलोपभोगार्थमायुष्कर्मफलोपभोगाय । अनाभोगनिर्वर्तितेन वीर्यविशेषेणेति । न चास्यायुष्कर्मणः फलाभावो भवति । इयांस्तु विशेषः क्रमपरिभोगे बहुकाल । संवर्तितपरिभोगे स्वल्प इति । न पुनरभुक्तं तत्र किंचित्कर्म परिशटतीति ।

# अथ तृतीयोऽध्यायः ।



अत्राह उक्तं भवता । नारका इति गतिं प्रतीत्य जीवस्यौदयिको भाव । तथा जन्मसु 'नारकदेवानामुपपात'[1] वक्ष्यति च । स्थितौ 'नारकाणा च द्वितीयादिषु'[2] । आस्रवेषु 'बह्वारम्भपरिग्रहत्व च नारकस्यायुष'[3] इति ॥ तत्र के नारका नामक चेति । अत्रोच्यते । नरकेषु भवा नारका । तत्र नरकप्रसिद्ध्यर्थमिदमुच्यते–

रत्नशर्करावालुकापङ्कधूमतमोमहातम प्रभाभूमयो घनाम्बुवाताकाशप्रतिष्ठा सप्ताधोऽध. पृथुतरा: ॥ १ ॥

रत्नप्रभा शर्कराप्रभा वालुकाप्रभा पङ्कप्रभा धूमप्रभा तम प्रभा महातम प्रभा इत्येता भूमयो घनाम्बुवाताकाशप्रतिष्ठा भवन्त्येकैकश. सप्त अधोऽध । रत्नप्रभाया अध शर्कराप्रभा शर्कराप्रभाया अधो वालुकाप्रभा । इत्येवं शेषा । अम्बुवाताकाशप्रतिष्ठा इति सिद्धे घनग्रहण क्रियते यथा प्रतीयते घनमेवाम्बु अध पृथिव्या । वातास्तु घनास्तनवश्चेति । तदेव खरपृथिवी पङ्कप्रतिष्ठा पङ्को घनोदधिवलयप्रतिष्ठो घनोदधिवलय घनवातवलयप्रतिष्ठ घनवातवलय तनुवातवलयप्रतिष्ठ ततो महातमोभूतमाकाशम् । सर्वं चेतत्पृथिव्यादि तनुवातवलयान्तमाकाशप्रतिष्ठम् । आकाश त्वात्मप्रतिष्ठम् । उक्त-

---

१ अ २ सू ३
२ अ ४ सू ३५
३ अ ६ सू १६
४ अ ६ सू १६

५ रत्नप्रभाया सर्वाधस्तनयोजनसहस्र पङ्क इत्युच्यते । इत्येवमापङ्कया । सप्तम्या तु साधाधपञ्चाशत्सहस्रयोजनानि ।

मवगाहनमाकाशस्येति । तदनेन क्रमेण लोकानुभावसंनिविष्टा असङ्ख्येययोजनकोटीकोट्यो विस्तृता. सप्त भूमयो रत्नप्रभाद्या.॥

सप्तग्रहण नियमार्थं रत्नप्रभाद्या माभूवन्नेकशो ह्यनियतसङ्ख्या इति । किं चान्यत् । अध. सप्तैवेत्यवधार्यते। ऊर्ध्वं त्वेकैवेति वक्ष्यते। अपि च तन्त्रान्तरीया असङ्ख्येयेषु लोकधातुष्वसङ्ख्येया पृथिवी प्रस्तारा इत्यध्यवसिताः । तत्प्रतिषेधार्थं च सप्तग्रहणमिति ॥

सर्वाश्चैता अधोऽधः पृथुतरा. छत्रातिच्छत्रसंस्थिता । धर्मा वंशा शैलाञ्जनारिष्टा माघव्या माघवीति चासा नामधेयानि यथा सङ्ख्यमेव भवन्ति । रत्नप्रभा घनभावेनाशीतं योजनशतसहस्र शेषा द्वात्रिंशदष्टाविंशतिविंशत्यष्टादशषोडशाष्टाधिकमिति । सर्वे घनोदधयो विंशतियोजनसहस्राणि । घनवाततनुवातास्त्वसङ्ख्येयानि अधोऽधस्तु घनतरा विशेषेणेति ॥ १ ॥

## तासु नरकाः ॥ २ ॥

तासु रत्नप्रभाद्यासु भूपूर्वमधश्चैकशो योजनसहस्रमेकैक वर्जयित्वा मध्ये नरका भवन्ति । तद्यथा । उष्ट्रिकापिष्टपचनी-लोहीकरकेन्द्रजानुकाजन्तोकायस्कुम्भाय.कोष्ठादिसस्थाना वज्रतला सीमन्तकोपक्रान्ता रौरवोऽच्युतो रौद्रो हाहारवो घातनः शोचन-स्तापन क्रन्दनो विलपनश्छेदनो भेदन खटाखट. कालपिञ्जर इत्ये

१ तन्त्रान्तरीया जिनप्रवचनबाह्या । ते च प्राय प्रस्तावान्मायासूनवीया एव गृह्यन्ते ।

२ एकरज्जुप्रमाणाविष्कम्भायामाभ्या रत्नप्रभा । शर्कराप्रभार्धतृतीयरज्जुप्रमाणा वालुकाप्रभा चतूरज्जुप्रमाणा पङ्कप्रभा पञ्चरज्जुप्रमाणा धूमप्रभा रज्जुषट्कप्रमाणा तम प्रभार्धसप्तरज्जुप्रमाणा महातम प्रभा सप्तरज्जुप्रमाणेति ।

३ छत्रमायामविष्कम्भाभ्या लघु भवति तदधोवर्ति विस्तीर्णतर तस्याप्यधो विशालतम इत्यत छत्रातिछत्रवत् स्थिता ।

४ धर्मा इति नाम रत्नप्रभा इति गोत्रम् । एव क्रमेण सप्तानामपि ज्ञेयम् ।

त्रमाश्चा अशुभनामान कालमहाकालरौरवमहारौरवाप्रतिष्ठानपर्यन्ता.। रत्नप्रभाया नरकाणा प्रस्तारास्त्रयोदश।द्विद्व्यूना शेषासु। रत्नप्रभाया नरकवासाना त्रिंशच्छतसहस्राणि ।। शेषासु पञ्चविंशति पञ्चदश दश त्रीण्येक पञ्चोन नरकशतसहस्रमित्याषष्ठ्या. । सप्तम्या तु पञ्चैव महानरका इति ॥ २ ॥

नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रिया. ॥ ३ ॥

ते नरका भूमिक्रमेणाधोऽधो निर्माणतोऽशुभतरा । अशुभा रत्नप्रभाया ततोऽशुभतरा शर्कराप्रभाया ततोऽप्यशुभतरा वालुकाप्रभायाम् । इत्येवमासप्तम्या ॥

नित्यग्रहण गतिजातिशरीराङ्गोपाङ्गकर्मनियमादेते लेश्यादयो भावा नरकगतौ नरकपञ्चेन्द्रियजातौ च नैरन्तर्येणाभवक्षयोद्वर्तनाद्भवन्ति न कदाचिदक्षिनिमेषमात्रमपि न भवन्ति शुभा वा भवन्त्यतो नित्या इत्युच्यन्ते ॥

अशुभतरलेश्या. । कापोतलेश्या रत्नप्रभायाम् । ततस्तीव्रतरसंक्लेशाध्यवसाना कापोता शर्कराप्रभायाम् । ततस्तीव्रतरसंक्लेशाध्यवसाना कापोतनीला वालुकाप्रभायाम् । ततस्तीव्रतरसंक्लेशाध्यवसाना नीला पङ्कप्रभायाम् । ततस्तीव्रतरसंक्लेशाध्यवसाना नीलकृष्णा धूमप्रभायाम् । ततस्तीव्रतरसंक्लेशाध्यवसाना कृष्णा तमःप्रभायाम्। ततस्तीव्रतरसंक्लेशाध्यवसाना कृष्णैव महातमःप्रभायामिति।

अशुभतरपरिणाम । बन्धनगतिसंस्थानभेदवर्णगन्धरसस्पर्श-

---

१ बन्ध –पुद्गलाना शरीरादिषु संश्लिष्यतामत्यन्ताशुभतरपरिणामो भवति। गति नारकाणामप्रशस्तविहायोगतिनामकर्मो (८ १२) दयादशुभा भवन्त्युष्ट्रपतङ्गादिवत् । संस्थान नरकाकृति नारकाकृतिश्च उभयमप्यालोक्यमानमेवोद्वेगमुत्पादयति महाश्वभ्रवत्, पिशाचाकृतिवच्च । भेदपरिणामोऽपि पुद्गलानामशुभ शरीरनरककुड्यादिभ्यो विभिद्यमाना पुद्गला वर्णस्पर्शादिभिरशुभपरिणामा जायन्ते, ततश्च दु खहेतवो भवन्ति ।

गुरुलघुशब्दाख्यो दशविधोऽशुभः पुद्गलपरिणामो नरकेषु। अशुभतरश्चाधोऽधः। तिर्यगूर्ध्वमधश्च सर्वतोऽनन्तेन भयानकेन नित्योत्तमकेन तमसा नित्यान्धकाराः श्लेष्ममूत्रपुरीषस्रोतोमलरुधिरवसामेदपूयानुलेपनतला श्मशानमिव पूतिमांसकेशास्थिचर्मदन्तनखास्तीर्णभूमयः। श्वशृगालमार्जारनकुलसर्पमूषकहस्त्यश्वगोमानुषशवकोष्ठाशुभतरगन्धाः। हा मातर्धिगहो कष्टं बत मुञ्च तावद्धावत प्रसीद भर्तर्मा वधीः कृपणकमित्यनुबद्धरुदितैस्तीव्रकरुणैर्दीनविक्लवैर्विलापैरार्तस्वनैर्निनादैर्दीनकृपणकरुणैर्याचितैर्बाष्पसंनिरुद्धैर्निस्तनितैर्गाढवेदनैः कूजितैः सन्तापोष्णैश्च निश्वासैरनुपरतभयस्वनाः।

अशुभतरदेहाः। देहाः शरीराणि। अशुभनामप्रत्ययादशुभान्यङ्गोपाङ्गनिर्माणसंस्थानस्पर्शरसगन्धवर्णस्वराणि। हुण्डानि निर्लूनाण्डजशरीराकृतीनि क्रूरकरुणबीभत्सप्रतिभयदर्शनानि दुःखभाज्यशुचीनि च तेषु शरीराणि भवन्ति। अतोऽशुभतराणि चाधोऽधः। सप्त धनूंषि त्रयो हस्ताः षडङ्गुलमिति शरीरोच्छ्रायो नारकाणां रत्नप्रभायाम्। द्विर्द्विः शेषासु। स्थितिवच्चोत्कृष्टजघन्यता वेदितव्या॥

अशुभतरवेदनाः। अशुभतराश्च वेदना भवन्ति नरकेष्वधोऽधः। तद्यथा। उष्णवेदनास्तीव्रास्तीव्रतरास्तीव्रतमाश्चातृतीयायाः। उष्ण

---

१ सर्वेषां हि जीवानां शरीराण्यात्मनो न गुरूणि नापि लघूनि इति अगुरुलघुपरिणामः। सचानिष्टोऽनेकविधदुःखावहत्वात्।

२ प्रेतीभूतानां श्वादीनामुदरदौर्गन्ध्यवद्दौर्गन्ध्याविशिष्टाः।

३ अनुबद्ध—सततम्।

४ यत्र हस्तपादाद्यवयवा बहुप्राया प्रमाणविसंवादिनश्च तद्धुण्डमित्युच्यते।

५ निर्लून—भिन्नम्।

६ रत्नप्रभानारकशरीराणां द्विगुणं द्वितीयस्यां नारकशरीरप्रमाणम्। तदपि द्विगुणं तृतीयस्याम्। एवं यावत्सप्तम्यां पञ्चधनुःशतानि पूर्णानि।

७ बहूनामुष्णा स्तोकानां शीतेत्युष्णशीते।

शीते चतुर्थ्याम् । शीतोष्णे पञ्चम्याम् । परयो शीता शीततराश्चेति । तद्यथा । प्रथमशरत्काले चरमनिदाघे वा पित्तव्याधिप्रकोपाभिभूत शरीरस्य सर्वतो दीप्ताग्निराशिपरिवृतस्य व्यभ्रे नभसि मध्याह्ने नि-वातेऽतिरस्कृतातपस्य यादृगुष्णज दु ख भवति ततोऽनन्तगुण प्रकृष्ट कष्टमुष्णवेदनेषु नरकेषु भवति । पौषमाघयोश्च मासयोस्तु-षारलिप्तगात्रस्य रात्रौ हृत्यकरचरणाधरोष्ठदशनायासिनि प्रतिसम यप्रवृद्धे शीतमारुते निरग्न्याश्रयप्रावरणस्य यादृक्शीतसमुद्भव दु ख-मशुभ भवति ततोऽनन्तगुण प्रकृष्ट कष्ट शीतवेदनेषु नरकेषु भवति । यदि किलोष्णवेदनान्नरकादुत्क्षिप्य नारक सुमहत्यङ्गारराशावुद्दीप्ते प्रक्षिप्येत स किल सुशीता मृदुमारुत शीतलां छायामिव प्राप्त सुख-मनुपम विन्द्यान्निद्रां चोपलभेत एव कष्टतर नारकमुष्णमाचक्षते । तथा किल यदि शीतवेदनान्नरकादुत्क्षिप्य नारक कश्चिदाकाशे माघमासे निशि प्रवाते महति तुषारराशौ प्रक्षिप्येत सदन्तशब्दोत्तम परमकम्पायासकरेऽपि तत्र सुख विन्द्यादनुपमा निद्रा चोपलभेत एव कष्टतर नारक शीतदु खमाचक्षत इति ॥

अशुभतरविक्रिया । अशुभतराश्च विक्रिया नरकेषु नारकाणां भवन्ति । शुभ करिष्याम इत्यशुभतरमेव विकुर्वते । दु खाभिभूत-मनसश्च दु खप्रतीकार चिकीर्षवो गरीयस एव ते दु खहेतून्वि-कुर्वत इति ॥ ३ ॥

परस्परोदीरितदु खा ॥ ४ ॥

परस्परोदीरितानि दु खानि नरकेषु नारकाणां भवन्ति । क्षेत्रस्वभावजनिताच्चाशुभात्पुद्गलपरिणामादित्यर्थ ॥

---

१ बहुला शीता स्तोकानामुष्णेति शीतोष्ण ।

२ अनुला निमाघस्त्वाद् द्वाभ्यां मासाभ्यां प्रथम प्रथमत्वचरमत्वव्यवहार ।

३ आश्रय – निवासस्थानम् ।

४ परस्परोदीरितानि – अन्योन्यदत्तानि ।

तत्र क्षेत्रस्वभावजनितपुद्गलपरिणामः शीतोष्णक्षुत्पिपासादि। शीतोष्णे व्याख्याते क्षुत्पिपासे वक्ष्यामः। अनुपरतशुष्केन्धनोपादानेनेवाग्निना तीक्ष्णेन प्रततेन क्षुदग्निना दन्दह्यमानशरीरा अनुसमयमाहरयन्ति ते सर्वे पुद्गलानप्यग्रुस्तीव्रया च नित्यानुषक्तया पिपासया शुष्ककण्ठौष्ठतालुजिह्वाः सर्वोदधीनपि पिबेयुर्न च तृप्तिं समाप्नुयुर्वर्धेयातामेव चैषां क्षुत्तृष्णे इत्येवमादीनि क्षेत्रप्रत्ययानि ॥

परस्परोदीरितानि च। अपि चोक्तम्। भवप्रत्ययोऽवधिर्नारकदेवानामिति। तन्नारकेष्ववधिज्ञानमशुभभवहेतुकं मिथ्यादर्शनयोगाच्च विभङ्गज्ञानं भवति। भावदोषोपघाताच्च तेषां दुःखकारणमेव भवति। तेन हि ते सर्वतः तिर्यगूर्ध्वमधश्च दूरत एवाजस्रं दुःखहेतून्पश्यन्ति। यथा च काकोलूकमहिनकुलं चोत्पत्त्यैव बद्धवैरं तथा परस्परं प्रति नारकाः। यथा वापूर्वान् शुनो दृष्ट्वा श्वानो निर्दयं क्रुध्यन्त्यन्योन्यं प्रहरन्ति च तथा तेषां नारकाणामवधिविषयेण दूरत एवान्योन्यमालोक्य क्रोधस्तीव्रानुशयो जायते दुरन्तो भवहेतुकः। ततः प्रागेव दुःखसमुद्घातार्त्ता क्रोधाग्न्यादीपितमनसोऽतर्किता इव श्वानः समुद्धता वैक्रियं भयानकं रूपमास्थाय तत्रैव पृथिवीपरिणामजानि क्षेत्रानुभावजनितानि चायःशूलशिलामुसलमुद्गरकुन्ततोमरासिपट्टिशशक्त्ययोघनखड्गयष्टिपरशुभिण्डिमालादीन्यायुधान्यादाय करचरणदशनैश्चान्योन्यमभिघ्नन्ति। ततः परस्पराभिहता विकृताङ्गा निस्तनन्तो गाढवेदनाः शूनाघातनप्रविष्टा इव महिषसूकरोरभ्राः स्फुरन्तो रुधिरकर्दमे चेष्टन्ते। इत्येवमादीनि परस्परोदीरितानि नरकेषु नारकाणां दुःखानि भवन्तीति ॥ ४ ॥

१ अ १ सू २२

२ नवीनान् अपरिचितानित्यर्थः।

३ शब्दयन्तः।

४ सौनिकस्य वधस्थाने प्रविष्टाः।

५ उरभ्र—मेषः।

संक्लिष्टासुरोदीरितदु.खाश्च प्राक् चतुर्थ्याः ॥ ५ ॥

संक्लिष्टासुरोदीरितदु खाश्च नारका भवन्ति । तिसृषु भूमिषु प्राक् चतुर्थ्याः । तद्यथा । अम्बाम्बरीषश्यामशबलरुद्रोपरुद्रकालमहाकालास्यासिपत्रवनकुम्भीवालुकावैतरणीखरस्वरमहाघोषाः पञ्चदश परमाधार्मिकाः मिथ्यादृष्टय पूर्वजन्मसु संक्लिष्टकर्माणः पापाभिरतय आसुरीं गतिमनुप्राप्ताः कर्मक्लेशजा एते ताच्छील्यान्नारकाणा वेदना समुदीरयन्ति चित्राभिरुपपत्तिभि । तद्यथा । तप्तायोरसपायननिष्टप्तायःस्तम्भालिङ्गनकूटशाल्मल्यग्रारोपणावतारणायोघनाभिघातवासी क्षुरतक्षणक्षारतप्ततैलाभिषेचनाय कुम्भपाकाम्बरीषतर्जनयन्त्रपीडनाय शूलशलाकाभेदनक्रकचपाटनाङ्गारदहनवाहनासूचीशाड्वलाकर्षणै तथा सिंहव्याघ्रद्वीपिश्वशृगालवृककोकमार्जारनकुलसर्पवायसगृध्रकाकोलूकश्येनादिखादनै तथा तप्तवालुकावतरणासिपत्रवनप्रवेशनवैतरण्यवतारणपरस्परयोधनादिभिरिति ॥

स्यादेतत्किमर्थं त एव कुर्वन्तीति । अत्रोच्यते । पापकर्माभिरतय इत्युक्तम् । तद्यथा गोवृषभमहिषवराहमेषकुक्कुटवार्तकालावकान्मुष्टिमल्लांश्च युध्यमानान् परस्पर चाभिघ्नतः पश्यता रागद्वेषाभिभूतानामकुशलानुबन्धिपुण्यानां नराणां परा प्रीतिरुत्पद्यते तथा तेषामसुराणा नारकांस्तथा तानि कारयतामन्योन्य घ्नतश्च पश्यता परा प्रीतिरुत्पद्यते । ते हि दुष्टकन्दर्पास्तथाभूतान् दृष्ट्वाट्टहासं मुञ्चन्ति चेलोत्क्षेपान्क्ष्वेडितास्फोटितावल्गित तलतालनिपातनाश्च कुर्वन्ति महतश्च सिंहनादान्नदन्ति । तच्च तेषां सत्यपि देवत्वे सत्सु च कामिकेष्वन्येषु प्रीतिकारणेषु मायानिदानमिथ्यादर्शनशल्यतीव्रकषायोपह-

---

१ शल्यते बाध्यतेऽनेनेति शल्यम्, क्लेशाकारस्वरूपत्वे सति सयमस्वरूपभेदित्व शल्यस्य लक्षण । तच्च शल्य द्रव्यतस्तोमरादि, भावतस्तु इद त्रिविध मायानिदान मिथ्यादर्शनभेदात् ( १ ) माया–निकृति सैव शल्य मायाशल्यम् । ( २ ) नितरां दीयते–लूयते मोक्षफलमनिन्द्यब्रह्मचर्यादिसाध्य कुशलकर्मकल्पतरुवनमनेन देवद्धर्यादिप्रार्थनपरिणामासिशिलासिनेति निदानम्, ( ३ ) मिथ्या–विपरीत दर्शनं मिथ्यादर्शन मिति ।

तस्यानालोचितभावदोषस्याप्रत्यवमर्षस्याकुशलानुबन्धिपुण्यकर्मणो बालतपसश्च भावदोषानुकर्षिणः फलं यत्सत्स्वप्यन्येषु प्रीतिहेतुष्वशुभा एव प्रीतिहेतवः समुत्पद्यन्ते ॥

इत्येवमप्रीतिकरं निरन्तरं सुतीव्रं दुःखमनुभवतां मरणमेव काङ्क्षतां तेषां न विपत्तिरकाले विद्यते कर्मभिर्धारितायुषाम्। उक्तं हि। 'औपपातिकचरमदेहोत्तमपुरुषासङ्ख्येयवर्षायुषोऽनपवर्त्यायुषः' इति। नैव तत्र शरणं विद्यते नाप्यपक्रमणम्। ततः कर्मवशादेव दग्धपाटितभिन्नच्छिन्नक्षतानि च तेषां सद्य एव संरोहन्ति शरीराणि दण्डराजिरिवाम्भसीति ॥

एवमेतानि त्रिविधानि दुःखानि नरकेषु नारकाणां भवन्तीति ॥ ५ ॥

तेष्वेकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमाः सत्त्वानां परा स्थितिः ॥ ६ ॥

तेषु नरकेषु नारकाणां पराः स्थितयो भवन्ति । तद्यथा। रत्नप्रभायामेकं सागरोपमम्। एवं त्रिसागरोपमा सप्तसागरोपमा दशसागरोपमा सप्तदशसागरोपमा द्वाविंशतिसागरोपमा त्रयस्त्रिंशत्सागरोपमा। जघन्या तु पुरस्ताद्वक्ष्यते। 'नारकाणां च द्वितीयादिषु। दशवर्षसहस्राणि प्रथमायाम्' इति।

तत्रास्रवैर्यथोक्तैर्नारकसंवर्तनीयैः कर्मभिरसंज्ञिनः प्रथमायामु-

---

१ अ २ सू ५२
२ दण्डेन अम्भसि जले कृता रेखेव।
३ अ ४ सू ४३
४ अ ४ सू ४४
५ कायवाङ्मनःकृतशुभाशुभकर्मागमनरूपत्वमास्रवस्य लक्षणम्।

मुत्पद्यन्ते । सरीसृपा द्वयोरादितः प्रथमद्वितीययो॰ एव पक्षिणस्ति-सृपु । सिंहाश्चतसृपु । उरगा पञ्चसु । स्त्रिय॰ पट्सु । मत्स्य-मनुष्या सप्तस्विति । न तु देवा नारका वा नरकेषूपपत्ति प्राप्नु-वन्ति । न हि तेषा बह्वारम्भपरिग्रहादयो नरकगतिनिर्वर्तका हेतव सन्ति । नाप्युद्वर्त्य नारका देवेषूत्पद्यन्ते । न ह्येषा सरागसंयमादयो देवगतिनिर्वर्तका हेतव सन्ति । उद्वर्तितास्तु तिर्यग्योनौ मनुष्येषु वोत्पद्यन्ते । मानुषत्व प्राप्य केचित्तीर्थकरत्वमपि प्राप्नुवन्त्यादितस्ति-सृभ्य॰ निर्वाण चतसृभ्य संयम पञ्चभ्य संयमासंयम पड्भ्य॰ सम्यग्दर्शन सप्तभ्योऽपीति ॥

द्वीपसमुद्रपर्वतह्रदतडागसरांसि ग्रामनगरपत्तनादयो विनिवेशा बादरो वनस्पतिकायो वृक्षतृणगुल्मादि द्वीन्द्रियादयस्तिर्यग्योनिजा मनुष्या देवाश्चतुर्निकाया अपि न सन्ति । अन्यत्र समुद्घातोपपातवि-क्रियासाङ्गतिकनरकपालेभ्य । उपपाततस्तु देवा रत्नप्रभायामेव सन्ति नान्यासु । गतिस्तृतीयां यावत् ॥

यच्च वायव आपो धारयन्ति न च विष्वग्गच्छन्त्यापश्च पृथिवीं धारयन्ति न च प्रस्पन्दन्ते पृथिव्यश्चाप्सु विलय न गच्छन्ति तत्त-स्यानादिपारिणामिकस्य नित्यसन्ततेर्लोकविनिवेशस्य लोकस्थिति रेव हेतुर्भवति ॥

अत्राह । उक्त भवता लोकाकाशेऽवगाह. । तदनन्तर ऊर्ध्वं गच्छन्त्यालोकान्तादिति । तत्र लोकः क. कतिविधो वा किंसंस्थितो वेति । अत्रोच्यते ॥

---

१ बादर –स्थूल ।

२ अस्य सूत्रस्यार्थस्य भाष्यस्य चाद्यमङ्कर्या नवमश्लोकस्य चरमप्रकट्टे टिप्पन्याम् ।

३ साङ्गतिक–पूर्वसम्भिमूनम् ।

४ नरकपाल –महापापिन ।

पञ्चास्तिकायसमुदायो लोकः । ते चास्तिकायाः[1] स्वतत्त्वता विधानतो लक्षणतश्चोक्ता वक्ष्यन्ते च । स लोकः क्षेत्रविभागेन त्रिविधोऽधस्तिर्यगूर्ध्वं चेति । धर्माधर्मास्तिकायौ लोकव्यवस्थाहेतू । तयोरवगाहविशेषाल्लोकानुभावनियमात् सुप्रतिष्ठकवज्राकृतिर्लोकः । अधोलोको गोकन्धराधरार्धाकृति । उक्तं ह्येतत् । भूमयः सप्ताधोऽधः पृथुतराश्छत्रातिच्छत्रसंस्थिता इति ता यथोक्ताः । तिर्यग्लोको झल्लर्याकृतिः । ऊर्ध्वलोको मृदङ्गाकृतिरिति । नत्र तिर्यग्लोकप्रसिद्ध्यर्थमिदमाकृतिमात्रमुच्यते ॥ ६ ॥

जम्बूद्वीपलवणादयः शुभनामानो द्वीपसमुद्राः ॥ ७ ॥

जम्बूद्वीपादयो द्वीपा लवणादयश्च समुद्राः शुभनामान इति । यावन्ति लोके शुभानि नामानि तन्नामान इत्यर्थः । शुभान्येव वा नामान्येषामिति ते शुभनामानः । द्वीपादनन्तरः समुद्रः समुद्रादनन्तरो द्वीपो यथासङ्ख्यम् । तद्यथा । जम्बूद्वीपो द्वीपो लवणोदः समुद्रः धातकीखण्डो द्वीपः कालोदः समुद्रः पुष्करवरो द्वीपः पुष्करोदः समुद्रः वरुणवरो द्वीपो वरुणोदः समुद्रः क्षीरवरो द्वीपः क्षीरोदः समुद्रो घृतवरो द्वीपो घृतोदः समुद्रः इक्षुवरो द्वीपः इक्षुवरोदः समुद्रः नन्दीश्वरो द्वीपो नन्दीश्वरवरोदः समुद्रः अरुणवरो द्वीपोऽरुणवरोदः समुद्रः इत्येवमसङ्ख्येया द्वीपसमुद्राः स्वयम्भूरमणपर्यन्ता[2] वेदितव्या इति ॥ ७ ॥

द्विर्द्विर्विष्कम्भाः पूर्वपूर्वपरिक्षेपिणो वलयाकृतयः ॥ ८ ॥

सर्वे चैते द्वीपसमुद्रा यथाक्रममादितो द्विर्द्विर्विष्कम्भाः[3] पूर्वपूर्व

---

[1] पञ्चमाध्याये ।

[2] स्वयं भवन्तीति स्वयम्भुवो देवास्ते यत्रागत्य रमन्त इति स्वयम्भूरमणः, अर्धरज्जुप्रमाणः प्रान्तसमुद्रः ।

[3] विष्कम्भः—मध्यविस्तारः ।

परिक्षेपिणो वलयाकृतयः प्रत्येतव्या' । तद्यथा । योजनशतसहस्र-विष्कम्भो जम्बूद्वीपस्य वक्ष्यते । तद्द्विगुणो लवणजलसमुद्रस्य । लवणजलसमुद्रविष्कम्भाद् द्विगुणो धातकीखण्डद्वीपस्यस्य । इत्येवमा-स्वयम्भूरमणसमुद्रादिति ॥

पूर्वपूर्वपरिक्षेपिण । सर्वे पूर्वपूर्वपरिक्षेपिणः प्रत्येतव्या । जम्बू-द्वीपो लवणसमुद्रेण परिक्षिप्त । लवणजलसमुद्रो धातकीखण्डेन परिक्षि-प्त घातकीखण्डद्वीपः कालोदसमुद्रेण परिक्षिप्त' । कालोदसमुद्र' पुष्क-रवरद्वीपार्धेन परिक्षिप्त' पुष्करद्वीपार्ध मानुपोत्तरेण पर्वतेन परिक्षि-प्तम् । पुष्करवरद्वीप. पुष्करवरोदेन समुद्रेण परिक्षिप्त. । एवमास्वयम्भू-रमणात्समुद्रादिति ॥

वलयाकृतय' । सर्वे च ते वलयाकृतय सह मानुपोत्तरेणेति ॥ ८ ॥

तन्मध्ये मेरुनाभिर्वृत्तो योजनशतसहस्र-

विष्कम्भो जम्बूद्वीप' ॥ ९ ॥

तेपा द्वीपसमुद्राणा मध्ये तन्मध्ये ॥ मेरुनाभि । मेरुरस्य नाभ्यामिति मेरुर्वास्य नाभिरिति मेरुनाभि । मेरुरस्य मध्य इत्यर्थ ॥ सर्वद्वीपसमुद्राभ्यन्तरो वृत्त. कुलालचक्राकृतिर्योजनशतसहस्रविष्क-म्भो जम्बूद्वीप. । वृत्तग्रहण नियमार्थम् । लवणादयो वलयवृत्ता जम्बूद्वीपस्तु प्रतरवृत्त इति । यथा गम्येत वलयाकृतिभिश्चतुर-स्रत्र्यस्रयोरपि परिक्षेपो विद्यते तथा च माभूदिति ॥

मेरुरपि काञ्चनस्थालनाभिरिव वृत्तो योजनसहस्रमधोधरणि-

---

१ अ २ सू ९

२ कुलालचक्रवद्वर्तुलाकार ।

तलमवगाढो नवनवत्युच्छ्रितो दशाधो विस्तृतः सहस्रमुपरीति। त्रिकाण्डस्त्रिलोकप्रविभक्तमूर्तिश्चतुर्भिर्वनैर्भद्रशालनन्दनसौमनसपाण्डकै परिवृत्त। तत्र शुद्धपृथिव्युपलवज्रशर्कराबहुलं योजनसहस्रमेकं प्रथमं काण्डम्। द्वितीयं त्रिषष्टिसहस्राणि रजतजातरूपाङ्कस्फटिकबहुलम्। तृतीयं षट्त्रिंशत्सहस्राणि जम्बूनदबहुलम्। वैडूर्यबहुला चास्य चूलिका चत्वारिंशद्योजनान्युच्छ्रायेण मूले द्वादशविष्कम्भेण मध्येऽष्टौ उपरि चत्वारीति। मूले वलयपरिक्षेपि भद्रशालवनम्। भद्रशालवनात्पञ्च योजनशतान्यारुह्य तावत्प्रतिक्रान्तिविस्तृतं नन्दनम्। ततोऽर्धत्रिषष्टिसहस्राण्यारुह्य पञ्चयोजनशतप्रतिक्रान्तिविस्तृतमेव सौमनसम्। ततोऽपि षट्त्रिंशत्सहस्राण्यारुह्य चतुर्नवतिचतुःशतप्रतिक्रान्तिविस्तृतं पाण्डकवनमिति। नन्दनसौमनसाभ्यामेकादशैकादशसहस्राण्यारुह्य प्रदेशपरिहाणिर्विष्कम्भस्येति ॥ ९ ॥

## तत्र भरतहैमवतहरिविदेहरम्यकहैरण्यवतैरावतवर्षाः क्षेत्राणि ॥ १० ॥

तत्र जम्बूद्वीपे भरतं हैमवतं हरयो विदेहा रम्यकं हैरण्यवतमैरावतमिति सप्त वंशाः क्षेत्राणि भवन्ति। भरतस्योत्तरतो हैमवतं हैमवतस्योत्तरतो हरय इत्येवं शेषाः। वंशा वर्षा वास्या इति चैषां गुणतः पर्यायनामानि भवन्ति। सर्वेषां चैषां व्यवहारनयापेक्षादादित्यकृतादिग्नियमादुत्तरतो मेरुर्भवति। लोकमध्यावस्थितं चाष्टम-

१ वंशा किल पर्ववन्तो भवन्ति तत्पर्वविभागवननात् वंशा एवामी भरतादयः। वर्षसंनिधानाच्च वर्षाः। मनुष्यादिनिवासाच्च वास्याः।

२ व्यवहारो हि संगृहीतानां पदार्थानां विधिपूर्वकमवहरणं लोकप्रसिद्धव्यवहारतत्परत्वात्, न खलु निश्चयमवलम्बने सर्वव्यवहारोच्छेदप्रसंगात्।

३ नैश्चयिकी दिक् कथं प्रतिपत्तव्येत्यत आह—लोकमध्यावस्थितमिति।

देश रुचकं दिग्नियमहेतुं प्रतीत्य यथासम्भवं भवतीति ॥१०॥

**तद्विभाजिनः पूर्वापरायता हिमवन्महाहिमवन्निषधनील-रुक्मिशिखरिणो वर्षधरपर्वताः ॥ ११ ॥**

तेषां वर्षाणां विभक्तारो हिमवान् महाहिमवान् निषधो नीलो रुक्मी शिखरी इत्येते षड् वर्षधरा पर्वता । भरतस्य हैमवतस्य च विभक्ता हिमवान् हैमवतस्य हरिवर्षस्य च विभक्ता महाहिमवानित्येवं शेषा ॥

तत्र पञ्च योजनशतानि षड्विंशानि षट् चैकोनविंशतिभागा भरतविष्कम्भः । स द्विर्द्विर्हिमवद्धैमवतादीनामाविदेहेभ्यः । परतो विदेहेभ्योऽर्धार्धहीना ॥ पञ्चविंशतियोजनान्यवगाढो योजनशतोच्छ्रायो हिमवान् ॥ तद्द्विर्महाहिमवान् । तद्द्विर्निषध इति ॥

भरतवर्षस्य योजनानां चतुर्दशसहस्राणि चत्वारि शतान्येकसप्ततानि षट् च भागा विशेषतो ज्या इषुर्यथोक्तो विष्कम्भः ।

---

१ रुचक –तिर्यग्लोकस्य मध्यभागे आयामविष्कम्भाभ्यां प्रत्येकं रज्जुप्रमाणौ सर्वप्रतराणां क्षुल्लकौ द्वौ नभःप्रदेशप्रतरौ स्तः । तयोश्च मेरुमध्यप्रदेशे मध्यं लभ्यते । तत्र च मध्ये उपरितनप्रतरस्य ये चत्वारो नभःप्रदेशास्तथा–अधस्तनप्रतरस्य तु ये चत्वारो व्योमप्रदेशास्तेषामष्टानामपि प्रदेशानां समये रुचक इति परिभाषा । अथ चाष्टप्रदेशिको रुचकः समस्ततिर्यग्लोकमध्यवर्ती गोस्तनाकारः क्षेत्रस्य षण्णामपि दिशां चतसृणामपि च विदिशां प्रभव (उत्पत्तिस्थानम्) मन्तव्य –तिर्यग्लोकमध्ये रत्नप्रभापृथिव्या उपरि बहुमध्यदेशे मेर्वन्तर्द्वौ सर्वक्षुल्लकप्रतरौ, तयोरुपरितनस्य चत्वारः प्रदेशा गोस्तनाकारसंस्थाना अधस्तनस्यापि चत्वारस्तथाभूता एवेत्येषोऽष्टप्रदेशात्मकश्चतस्रो रुचको दिशामनुदिशां च प्रभवः उत्पत्तिस्थानमिति । ( आचा १ श्रु )

२ ‘ अत्र सुगमत्वार्थं योजनानां कलाः एव कर्त्तव्याः स्युस्ताश्च जम्बूद्वीपपरिमाणे एकोनविंशतिलक्षा जायन्ते । अयं प्रकार इह अवगाह इति भण्यते । ततः इच्छावगाहो यस्य कस्यचित्क्षेत्रस्य विष्कम्भावगाहः प्रवेदनीयः स च कलागणनया भरतस्य दशसहस्री भवति । अनेन इच्छावगाहेन कृत्वा ऊनो हीनश्चासाववगाहः प्रागुक्तस्वरूपश्च इच्छावगाहेनावगाहः १८९०००० तेन अभ्यस्तो गुणितः इच्छावगाहोनावगाहाभ्यस्तस्तथाभूतस्य विष्कम्भस्य भरतादिविस्तारस्य १८९००००००० ततश्चतुर्गुणस्य ७५६००००००० यत् किल मूलं समायाति २७४९५' अथ योजनशानाय एकोनविंशतिभागो देयः १४४७१।८ इयं भरतज्या ।

धनु'काष्ठ चतुर्दशसहस्राणि शतानि पञ्चाष्टाविंशान्येकादश च भागाः साधिकाः ॥

भरतक्षेत्रमध्ये पूर्वापरायत उभयत' समुद्रमवगाढो वैताढ्य-पर्वत' षड् योजनानि सक्रोशानि धरणिमवगाढ, पञ्चाशद्विस्तरतः पञ्चविंशत्युच्छ्रित' ॥

विदेहेषु निषधस्योत्तरतो मन्दरस्य दक्षिणत' काञ्चनपर्वतश-तेन चित्रकूटेन विचित्रकूटेन चोपशोभिता देवकुरवो विष्कम्भेणैका-दश योजनसहस्राण्यष्टौ च शतानि द्विचत्वारिंशानि द्वौ च भागौ। एवमेवोत्तरेणोत्तराः कुरवश्चित्रकूटविचित्रकूटहीना द्वाभ्या च काञ्चना भ्यामेव यमकपर्वताभ्या विराजिता' ॥

विदेहा मन्दरदेवकुरूत्तरकुरुभिर्विभक्ता, क्षेत्रान्तरवद्भवन्ति पूर्वे चापरे च। पूर्वेषु षोडश चक्रवर्तिविजया नदीपर्वतविभक्ताः परस्परागमा, अपरेऽप्येवलक्षणा षोडशैव ॥

तुल्यायामविष्कम्भावगाहोच्छ्रायो दक्षिणोत्तरौ वैताढ्यौ तथा हिमवाच्छिखरिणो महाहिमवद्रुक्मिणौ निषधनीलौ चेति ॥

क्षुद्रमन्दरास्तु चत्वारोऽपि धातकीखण्डकपुष्करार्धका महा-मन्दरात्पञ्चदशभिर्योजनसहस्रैर्हीनोच्छ्राया। षड्भिर्योजनशतैर्धरणि तले हीनविष्कम्भा। तेषा प्रथम काण्ड महामन्दरतुल्यम्। द्वितीय सप्तभिर्हीनम्। तृतीयमष्टाभि। भद्रशालनन्दनवने महामन्दरवत्। ततोऽर्धषट्पञ्चाशद्योजनसहस्राणि सौमनस पञ्चशत विस्तृतम्। ततोऽ-ष्टाविंशतिसहस्राणि चतुर्नवति चतु शतविस्तृतमेव पाण्डक भवति। उपरि चाधश्च विष्कम्भोऽवगाहश्च तुल्यो महामन्दरेण। चूलिका चेति ॥

---

१ परस्परेणागम्या क्षेत्रविशेषा इत्यर्थ ।

विष्कम्भकृतेर्दशगुणाया मूलं वृत्तपरिक्षेप । स विष्कम्भपादाभ्यस्तो गणितम् । इच्छावगाहोनावगाहाभ्यस्तस्य विष्कम्भस्य चतुर्गुणस्य मूलं ज्या । ज्याविष्कम्भयोर्वर्गविशेषमूलं विष्कम्भाच्छोध्य शेषार्धमिषु । इषुवर्गस्य षड्गुणस्य ज्यावर्गयुतस्य कृतस्य मूलं धनु काष्ठम् । ज्यावर्गचतुर्भागयुक्तामिषुवर्गामिषुविभक्तं तत्प्रकृतिवृत्तविष्कम्भ । उदग्धनु काष्ठाद्दक्षिणं शोध्य शेषार्धं बाहुरिति ॥

अनेन करणाभ्युपायेन सर्वक्षेत्राणां सर्वपर्वतानामायामविष्कम्भज्येषुधनु काष्ठपरिमाणानि ज्ञातव्यानि ॥११॥

## द्विर्धातकीखण्डे ॥ १२ ॥

एते मन्दरवंशवर्षधरा जम्बूद्वीपेऽभिहिता एते द्विगुणा धातकीखण्डे द्वाभ्यामिष्वाकारपर्वताभ्यां दक्षिणोत्तरायताभ्यां विभक्ता । एभिरेव नामभिर्जम्बूद्वीपकसमसङ्ख्या पूर्वार्धे चापरार्धे च चक्रारकसंस्थिता निषधसमोच्छ्राया कालोदलवणजलस्पर्शिनो वंशधरा सेष्वाकारा । अरविवरसंस्थिता वंशा इति ॥ १२ ॥

## पुष्करार्धे च ॥ १३ ॥

यश्च धातकीखण्डे मन्दरादीनां सेष्वाकारपर्वतानां सङ्ख्याविषयनियम स एव पुष्करार्धे वेदितव्य ॥

---

११२ नियमादवस्यतया धनु पृष्ठवर्गात् जीवावर्गे विशोध्यावशेषस्य षड्भागे षड्भिभागे हृते यल्लभ्यमागच्छति तदिषुपरिमाणं भवति ।

इह भरतस्य इषुकरणं १०००० तद्वर्गस्तु १००००००० षड्गुण स च ६००००००००० अत पर ज्या चिन्तनीया । सा तु २७४०२५ तद्वर्ग स च ७ ५८०२' २०२५ एतौ द्वावपि इषु गावगावर्ग सयोज्य मूलं निष्काम्यम् । तच्चेद २७६०४३ तत एकोनविंशतिभागै प्राप्यन्ते १४५२८।११ इदं भरतस्येन धनुपृष्ठम् । ' उसुवग्गि छगुण जीवा-वग्गजुए मूल होइ धणुपिट्ठं ' इति वचनात् ।

१ सम्पूर्णभरतस्य धनु काष्ठं कृत्वा दक्षिणार्धभरतस्यापि धनु काष्ठं क्रियते । इदं च महत सकाशात्पाल्यम् । शेषमर्धदलितं सदैताल्पयुतोत्तरभरतस्य बाहुयुगं स्यात् । यत ' धणुदुगविसेससेसं दलिय बाहायुगं होइ ' इति वचनात् ।

तत पर मानुषोत्तरो नाम पर्वतो मानुषलोकपरिक्षेपी सुनगरप्राकारवृत्त. पुष्करवरद्वीपार्धविनिविष्टः काञ्चनमय सप्तदशैकविंशतियोजनशतान्युच्छ्रितश्चत्वारि त्रिंशानि क्रोश चाधो धरणीतलमवगाढो योजनसहस्र द्वाविंशमधस्ताद्विस्तृत' सप्तशतानि त्रयोविंशानि म'ये चत्वारि चतुर्विंशान्युपरीति ॥

न कदाचिदस्मात्परतो जन्मत सहरणतो वा चारणविद्याधरर्द्धिप्राप्ता अपि मनुष्या भूतपूर्वा भवन्ति भविष्यन्ति च । अन्यत्र समुद्घातोपपाताभ्याम् । अत एव च मानुषोत्तर इत्युच्यते ॥

तदेवमर्वाङ्मानुषोत्तरस्यार्धतृतीया द्वीपाः समुद्रद्वय पञ्चमन्दरा' पञ्चत्रिंशत्क्षेत्राणि त्रिंशद्वर्षधरपर्वता पञ्च देवकुरव' पञ्चोत्तरा' कुरवः शत षष्ट्यधिक चक्रवर्तिविजयाना द्वे शते पञ्चपञ्चाशदधिके जनपदानामन्तरद्वीपा. षट्पञ्चाशदिति ॥ १३ ॥

अत्राह । उक्त भवता मानुषस्य स्वभावमार्दवार्जवत्व चेति तत्र के मनुष्या. क चेति । अत्रोच्यते—

प्राग्मानुषोत्तरान्मनुष्या ॥ १४ ॥

प्राग्मानुषोत्तरात्पर्वतात्पञ्चत्रिंशत्सु क्षेत्रेषु सान्तरद्वीपेषु जन्मतो मनुष्या भवन्ति । सहरणविद्यर्द्धियोगात्तु सर्वेष्वर्धतृतीयेषु द्वीपेषु समुद्रद्वये च समन्दरशिखरेष्विति ॥

भारतका हैमवतका इत्येवमाद्य क्षेत्रविभागेन । जम्बूद्वीपका लवणका इत्येवमाद्य' द्वीपसमुद्रविभागेनेति ॥१४॥

---

१ तपोविशेषात्पुरुषानाद्जङ्घाचारणो विद्याचारिणश्च सयत्ता नन्दीश्वरादिद्वीपान गच्छन्ति चैत्यवन्दनार्थे । विद्याधरा महाविद्यासपन्ना ऋद्धिप्राप्ताश्च वैक्रियादिशरीरभाज सर्वे गच्छन्ति परत । नतु प्राणान् परित्यजन्ति तत्रैवेति ।

२ कच्छादयो विजयनामानो द्वात्रिंशज्जनपदा जम्बूद्वीपे । चतु षष्टिर्धातकीखण्डे पुष्करार्धे च । तत १६० भवन्ति । भरतैरावतापेक्षयार्यजनपदा द्विशत पञ्चाशच्च भवन्ति । तत्र तावदेकत्रापि भरतवर्षे अर्धषड्विंशा देशा आर्यसज्ञा मगधादय ।

## आर्या म्लिशश्च ॥ १५ ॥

द्विविधा मनुष्या भवन्ति। आर्या म्लिशश्च ॥ तत्रार्या षड्विधा.। क्षेत्रार्या जात्यार्या कुलार्या कर्मार्या[1] शिल्पार्या भाषार्या इति। तत्र क्षेत्रार्या[1] पञ्चदशसु कर्मभूमिषु जाता[1]। तद्यथा। भरते ष्वर्धषड्विंशतिषु जनपदेषु जाता शेषेषु च चक्रवर्तिविजयेषु। जात्यार्या इक्ष्वाकवो विदेहा हरयोऽम्बष्ठा ज्ञाताः कुरवो बुबुनाला उग्रा भोगा राजन्या इत्येवमादय। कुलार्या[1] कुलकराश्चक्रवर्तिनो बलदेवा वासुदेवा ये चान्ये आतृतीयादापञ्चमादासप्तमाद्वा कुलकरे-

---

१ तत्र क्षेत्रजातिकुलकर्मशिल्पभाषाज्ञानदर्शनचारित्रेषु शिष्टलोकन्यायधर्मानपेतान्वरणशीला आर्या।

२ एतद्विपरीतास्तु म्लिशा भवन्ति अव्यक्तानियतभाषाचेष्टत्वात्।

३ पित्रन्वयो जाति।

४ मात्रन्वय कुलम्।

५ अस्यामवसर्पिण्या वर्तमानाया या तृतीया समा सुषमदुषमाभिधाना तस्याश्च पश्चिमो भागस्तस्मिन्। पल्योपमाष्टभागप्रमाणे शेषे तिष्ठति सति कुलकरोत्पत्तिरभूत्। अर्धभरतमध्यमत्रिभागे–गङ्गासिन्धुमध्येऽत्र एतस्मिन्नर्द्धभरतमध्यमत्रिभागे बहुमध्यदेशे, न तु पर्यन्तेषु। उत्पन्ना कुलकरा सप्त। इहार्धभरत विजयार्धगङ्गासिन्धुपर्वतादारत परिग्राह्य न तु परत, व्याख्यानात्। १ विमलवाहन २ चक्षुष्मान् ३ यशस्वी ४ अभिचन्द्र ५ प्रसेनजित् ६ मरुदेव ७ नाभि।

जम्बूद्वीपप्रज्ञप्त्या पञ्चदश कुलकरास्तेषां नामानि—१ सुमति २ प्रतिश्रुति ३ सीमकर ४ सीमधर ५ क्षेमकर ६ क्षेमधर ७ विमलवाहन ८ चक्षुष्मान् ९ यशस्वी १० अभिचन्द्र ११ चन्द्राभ १२ प्रसेनजित् १३ मरुदेव १४ नाभि १५ ऋषभ। इति।

अत्राह कश्चित्–आवश्यकनियुक्त्यादिषु सप्तानां कुलकराणामभिधानमिह पञ्चदशानां तेषामभिधानं कथम्? यदि वा भवतु नामैतत् पुष्यदुरस्य.... वस्यपुरुषवर्णनस्य न्याय्यत्वात्।

भ्यो वा विशुद्धान्वयप्रकृतय.। कर्मार्या यजनयाजनाध्ययनाध्यापनप्रयोगकृपिलिपिवाणिज्ययोनिपोपणवृत्तय॰। शिल्पार्यास्तन्तुवायकुलालनापिततुन्नवायन्वेदादयोऽल्पसावद्या आगर्हिता जीवा.। भाषार्या नाम ये शिष्टभाषानियतवर्णं लोकरूढस्पष्टशब्द पञ्चविधानामप्यार्याणा सव्यवहार भाषन्ते ॥

अतो विपरीता म्लिशः.। तद्यथा। हिमवतश्चतसृषु विदिक्षु त्रीणि योजनशतानि लवणसमुद्रमवगाह्य चतसृणा मनुष्यविजातीनां चत्वारोऽन्तरद्वीपा भवन्ति त्रियोजनशतविष्कम्भायामा॰। तद्यथा। एकोरुकाणामाभाषकाणा लाङ्गूलिकाना वैषाणिकानामिति ॥ चत्वारि योजनशतान्यवगाह्य चतुर्योजनशतायामविष्कम्भा एवान्तरद्वीपा.। तद्यथा। हयकर्णानां गजकर्णाना गोकर्णाना शष्कुलिकर्णानामिति ॥ पञ्च योजनशतान्यवगाह्य पञ्च योजनशतायामविष्कम्भा एवान्तरद्वीपा.। तद्यथा। गजमुखाना व्याघ्रमुखानामादर्शमुखाना गोमुखानामिति ॥ षड् योजनशतान्यवगाह्य तावदायामविष्कम्भा एवान्तरद्वीपा। तद्यथा। अश्वमुखाना हस्तिमुखाना सिंहमुखाना व्याघ्रमुखानामिति ॥ सप्त योजनशतान्यवगाह्य तावदायामविष्कम्भा

१ अनाचार्यक शिल्प कर्म तत्रार्या कर्मार्या।

२ आचार्योपदेशात् शिक्षित शिल्प तन्तुवायादि तत्रार्या शिल्पार्या।

३ एतच्छब्दार्थ सम्प्रदायतो ज्ञेय।

४ शिष्टा सर्वातिशयसम्पन्ना गणधरादय तेषा भाषा संस्कृतार्धमागधिकादिका च तत्र शिष्टभाषानियता वर्णा विशिष्टेन पौर्वापर्येण संनिवेशिता यस्यासौ।

५ लोकरूढ अत्यन्तप्रसिद्ध सव्यवहारेषु स्फुट नाव्यक्तो बालभाषावत् लोकरूढ स्पष्ट शब्दो यस्मिन् सव्यवहारे तमेवाविधम्।

६ क्षेत्रादिभेदभाजामनन्तरात्तिना सव्यवहारम् आगच्छ याहि इद कुरु मैव कार्षीरित्येवमादिक भाषन्ते ये त भाषार्या।

७ शकयवनकिरातादय म्लिश।

एवान्तरद्वीपाः । तद्यथा । अश्वकर्णसिंहकर्णहस्तिकर्णकर्णप्रावरण-
नामान ॥ अष्टौ योजनशतान्यवगाह्याष्टयोजनशतायामविष्कम्भा
एवान्तरद्वीपा' । तद्यथा । उल्कामुखविद्युज्जिह्वमेषमुखविद्युद्दन्तना-
मान' ॥ नव योजनशतान्यवगाह्य नवयोजनशतायामविष्कम्भा ए-
वान्तरद्वीपा भवन्ति । तद्यथा । घनदन्तगूढदन्तविशिष्टदन्तशुद्धदन्त-
नामान' । एकोरुकाणामेकोरुकद्वीप' । एव शेषाणामपि स्वनाम-
भिस्तुल्यनामानो वेदितव्या ॥ शिखरिणोऽप्येवमेवेत्येव षट्पञ्चा-
शदिति ॥ १५ ॥

## भरतैरावतविदेहाः कर्मभूमयोऽन्यत्र देवकुरूत्तरकुरुभ्य ॥ १६ ॥

मनुष्यक्षेत्रे भरतैरावतविदेहा पञ्चदश कर्मभूमयो भवन्ति । अन्यत्र देवकुरूत्तरकुरुभ्य । ससारदुर्गान्तगमकस्य सम्यग्दर्शनज्ञानचारित्रात्मकस्य मोक्षमार्गस्य ज्ञातार कर्त्तार उपदेष्टारश्च भगवन्त, परमर्षयस्तीर्थकरा अत्रोत्पद्यन्ते । अत्रैव जाता सिद्ध्यन्ति नान्यत्र । अतो निर्वाणाय कर्मण सिद्धिभूमय कर्मभूमय इति । शेषासु विंशतिर्वंशा सान्तरद्वीपा अकर्मभूमयो भवन्ति । देवकुरूत्तरकुरवस्तु कर्मभूम्यभ्यन्तरा अप्यकर्मभूमय इति ॥ १६ ॥

---

१ एतश्चान्तरद्वीपकभाष्य प्रायो विनाशित सर्वत्र कैरपि दुर्विदग्धै । येन षण्णवतिरन्तरद्वीपका भाष्येषु दृश्यन्ते । अनार्षं चैतदध्यवसीयते । जीवाभिगमादिषु षट्पञ्चाशदन्तरद्वीपकाध्ययनात् । नापि वाचकमुख्या सूत्रोल्लङ्घनेनाभिदधति । असमाध्यमानत्वात् । तस्मात् सैद्धान्तिकपाशैर्विनाशितमिदमिति [ सिद्ध टी ] एवमेव हरिभद्र टीकायाम् ।

२ सकलकर्माग्नेर्विध्यापनाय सिद्धिप्राप्त्यै भूमय कर्मभूमय ।

नृस्थिती परापरे त्रिपल्योमान्तर्मुहूर्ते ॥ १७ ॥

नरो नरा मनुष्या मानुपा इत्यनर्थान्तरम्। मनुष्याणां परा स्थितिस्त्रीणि पल्योपमान्यपरान्तर्मुहूर्तेति ॥ १७ ॥

तिर्यग्योनीना च ॥ १८ ॥

तिर्यग्योनिजाना च परापरे स्थिती त्रिपल्योपमान्तर्मुहूर्ते भवतो यथासङ्ख्यमेव । पृथक्करणं यथासङ्ख्यदोपात्रिनिवृत्त्यर्थम् । इतरथा इदमेकमेव सूत्रमभविष्यदुभयत्र चोभे यथासङ्ख्य स्यातामिति ॥

द्विविधा चैपां मनुष्यतिर्यग्योनिजानां स्थिति[1] । भवस्थितिः कायस्थितिश्च । मनुष्याणां यथोक्ते त्रिपल्योपमान्तर्मुहूर्ते परापरे भवस्थिती । कायस्थितिस्तु परा सप्ताष्टौ वा भवग्रहणानि ॥

तिर्यग्योनिजाना च यथोक्ते समासतः परापरे भवस्थिती । व्यासतस्तु शुद्धपृथिवीकायस्य परा द्वादशवर्पसहस्राणि । खरपृथिवीकायस्य द्वाविंशति । अप्कायस्य सप्त । वायुकायस्य त्रीणि । तेजःकायस्य त्रीणि रात्रिंदिनानि । वनस्पतिकायस्य दशवर्पसहस्राणि । एपा कायस्थितिरसङ्ख्येया अवसर्पिण्युत्सर्पिण्यो वनस्पतिकायस्या-

---

१ परा—उत्कृष्टा । अपरा—जघन्या ।

२ अ ४ सू. १५

३ मनुष्यजन्मलब्ध्वा तिर्यग्जन्म वा कियन्त काल जीवति प्राणी जघन्येनोत्कर्षेण चेति ।

४ मनुष्यो भूत्वा तिर्यग्योनिवा मरणमनुभूय पुनर्मनुष्येष्वेव मनुष्य । तिर्यक्ष्वेव तिर्यग्योनिनैरन्तर्येण कतिकृत्व समुत्पद्यते ।

५ अष्टमभवे तु देवकुरूत्तरकुरुषूत्पद्यते पश्चाद् देवलोक गच्छति ।

६ अ ३ सू १७

७ अ ४ सू १५

नन्ताः । द्वीन्द्रियाणा भवस्थितिर्द्वादशवर्षाणि । त्रीन्द्रियाणामेकोनपञ्चाशद्रात्रिंदिनानि । चतुरिन्द्रियाणां षण्मासाः । एषा कायस्थितिः सङ्ख्येयानि वर्षसहस्राणि । पञ्चेन्द्रियतिर्यग्योनिजाः पञ्चविधाः । तद्यथा । मत्स्या उरगा, परिसर्पा, पक्षिणश्चतुष्पदा इति । तत्र मत्स्यानामुरगाणां भुजगाना च पूर्वकोट्येव पक्षिणा पल्योपमासङ्ख्येयभागश्चतुष्पदाना त्रीणि पल्योपमानि गर्भजाना स्थितिः । तत्र मत्स्याना भवस्थितिः पूर्वकोटिस्त्रिपञ्चाशदुरगाणा द्विचत्वारिंशद्भुजगाना द्विसप्ततिः, पक्षिणां स्थलचराणा चतुरशीतिर्वर्षसहस्राणि सम्मूर्छिमानां भवस्थितिः । एषा कायस्थितिः सप्ताष्टौ भवग्रहणानि । सर्वेषां मनुष्यतिर्यग्योनिजानां कायस्थितिरप्यपरान्तर्मुहूर्तैवेति ॥१८॥

इति तत्त्वार्थाधिगमसूत्रेषु लोकप्रज्ञप्तिर्नामा
तृतीयोऽध्यायः समाप्तः ॥ ३ ॥

---

# अथ चतुर्थोऽध्यायः ।



अत्राह । उक्तं भवता भवप्रत्ययोऽवधिर्नारकदेवानामिति[1] । तथौदायिकेषु भावेषु देवगतिरिति[2] । 'केवलिश्रुतसङ्घधर्मदेवावर्णवादो दर्शनमोहस्य'[3] 'सरागसंयमादयो देवस्य'[4] 'नारकसम्मूर्छिनो नपुंसकानि'[5] 'न देवाः'[6] । तत्र के देवाः । कतिविधा वेति । अत्रोच्यते—

देवाश्चतुर्निकायाः ॥ १ ॥

देवाश्चतुर्निकाया भवन्ति । तान्परस्ताद्वक्ष्याम ॥ १ ॥

तृतीयः पीतलेश्यः ॥ २ ॥

तेषां चतुर्णां देवनिकायानां तृतीयो देवनिकायः पीतलेश्य एव भवति । कश्चासौ । ज्योतिष्क इति ॥ २ ॥

दशाष्टपञ्चद्वादशविकल्पाः कल्पोपपन्नपर्यन्ताः ॥३॥

ते च देवनिकाया यथासङ्ख्यमेव विकल्पा भवन्ति । तद्यथा।

---

१ अ १ सू २२

२ अ २ सू ६ भाष्ये ।

३ अ ६ सू १४

४ अ ६ सू २०

५ अ २ सू ५०

६ अ २ सू ५१

७ वैमानिकानधिकृत्येदमुच्यते ऊर्ध्वलोकावसर इति । प्रधानत्वात्, अन्यथा भवनपतयोऽधोलोके, व्यन्तरज्योतिष्कास्तिर्यग्लोक इति ।

८ अ ४ सू ११-१२-१३-१७

दशविकल्पा भवनवासिनोऽसुरादयो वक्ष्यन्ते । अष्टविकल्पा व्यन्तरां किन्नरादय । पञ्चविकल्पा ज्योतिष्का सूर्यादयः । द्वादशविकल्पा वैमानिका. कल्पोपपन्नपर्यन्ता. सौधर्मादिष्विति ॥ ३ ॥

इन्द्रसामानिकत्रायस्त्रिंशपारिषद्यात्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकिल्बिषिकाश्चैकश ॥ ४ ॥

एकैकशश्चैतेषु देवनिकायेषु देवा दशविधा भवन्ति । तद्यथा । इन्द्राः सामानिकाः त्रायस्त्रिंशा पारिषद्या. आत्मरक्षा. लोकपाला अनीकानि अनीकाधिपतय प्रकीर्णका आभियोग्या किल्बिषिकाश्चेति । तत्रेन्द्रा भवनवासिव्यन्तरज्योतिष्कविमानाधिपतय इन्द्रसमा. सामानिका अमात्यपितृगुरुपाध्यायमहत्तरवत् केवलमिन्द्रत्वहीना । त्रायस्त्रिंशा मन्त्रिपुरोहितस्थानीया । पारिषद्या वयस्यस्थानीया । आत्मरक्षाः शिरोरक्षस्थानीया । लोकपाला आरक्षिकार्थचरस्थानीया । आनीकाधिपतयो दण्डनायकस्थानीया । अनीकान्यनीकस्थानीयान्येव । प्रकीर्णका. पौरजनपदस्थानीया । आभियोग्या दासस्थानीया । किल्बिषिका अन्तस्थस्थानीया इति ॥ ४ ॥

त्रायस्त्रिंशलोकपालवर्ज्या व्यन्तरज्योतिष्का ॥५॥

---

१ अ ४ सू ११

२ अ ४ सू १२

३ अ ४ सू १३

४ अ ४ सू १७

५ अन्ते परिगता पर्यन्ता कल्पोपपन्ना पर्यन्ता येषा ते इमे कल्पो—
कल्पाश्च द्वादश वक्ष्यमाणा सौधर्मादयोऽच्युतपर्यवसाना, तत्पदं — —
त्यावेदयति । परे तु द्विविकल्पा —ग्रैवेयकवासिनो विजयादि — —

६ अ ४ सू २०-२४

व्यन्तरा ज्योतिष्काश्चाष्टविधा भवन्ति त्रायस्त्रिंशलोकपालवर्ज्या इति ॥ ५ ॥

## पूर्वयोर्द्वीन्द्राः ॥ ६ ॥

पूर्वयोर्देवनिकाययोर्भवनवासिव्यन्तरयोर्देवविकल्पानां द्वौ द्वाविन्द्रौ भवतः[1]। तद्यथा। भवनवासिषु तावद् द्वौ असुरकुमाराणामिन्द्रौ भवतश्चमरो बलिश्च । नागकुमाराणां धरणो भूतानन्दश्च । विद्युत्कुमाराणां हरिर्हरिसहश्च । सुपर्णकुमाराणां वेणुदेवो वेणुदारी च । अग्निकुमाराणामग्निशिखोऽग्निमाणवश्च । वातकुमाराणां वेलम्ब. प्रभञ्जनश्च । स्तनितकुमाराणां सुघोषो महाघोषश्च । उदधिकुमाराणां जलकान्तो जलप्रभश्च । द्वीपकुमाराणां पूर्णोऽवशिष्टश्च । दिक्कुमाराणाममितोऽमितवाहनश्चेति ॥ व्यन्तरेष्वपि द्वौ किन्नराणामिन्द्रौ किन्नरः किम्पुरुषश्च । किम्पुरुषाणां सत्पुरुषो महापुरुषश्च । महोरगाणामतिकायो महाकायश्च । गन्धर्वाणां गीतरतिर्गीतयशाश्च । यक्षाणां पूर्णभद्रो माणिभद्रश्च । राक्षसानां भीमो महाभीमश्च । भूतानां प्रतिरूपोऽतिरूपश्च । पिशाचानां कालो महाकालश्चेति । ज्योतिष्काणां तु बहवः सूर्याश्चन्द्रमसश्च ॥ वैमानिकानामेकैक एव । तद्यथा । सौधर्मे शक्रः । ऐशाने ईशानः । सनत्कुमारे सनत्कुमार इति । एवं सर्वकल्पेषु स्वकल्पाह्वाः । परतस्त्विन्द्रादयो दश विशेषा न सन्ति । सर्वे एव स्वतन्त्रा इति ॥ ६ ॥

## पीतान्तलेश्याः ॥ ७ ॥

पूर्वयोर्निकाययोर्देवानां पीतान्ताश्चतस्रो लेश्या[2] भवन्ति ॥७॥

---

१ अच्युतकल्पात्परतः इन्द्रादयो विकल्पा ग्रैवेयकेषु विजयादिकेषु च न भवन्ति । सर्वे एव हि ते स्वतन्त्रत्वादहमिन्द्रा गमनागमनरहिताश्च प्राय इति ।

२ कृष्णा, नीला, कापोता, पीतेति ।

## कायप्रवीचारा आ ऐशानात् ॥ ८ ॥

भवनवास्यादयो देवा आ ऐशानात्कायप्रवीचारा भवन्ति । कायेन प्रवीचार एषामिति कायप्रवीचारा । प्रवीचारो नाम मैथुन विषयोपसेवनम् । ते हि संक्लिष्टकर्माणो मनुष्यवन्मैथुनसुखमनुप्रलीयमानास्तीव्रानुशया' कायसंक्लेशज सर्वाङ्गीण स्पर्शसुखमवाप्य प्रीतिमुपलभन्त इति ॥ ८ ॥

## शेषाः स्पर्शरूपशब्दमन प्रवीचारा द्वयोर्द्वयो ॥ ९ ॥

ऐशानादूर्ध्वं शेषाः कल्पोपपन्ना देवा द्वयोर्द्वयो॰ स्पर्शरूपशब्दमन॰प्रवीचारा भवन्ति यथासङ्ख्यम् । तद्यथा । सनत्कुमारमाहेन्द्रयोर्देवान्मैथुनसुखमेप्सूनुत्पन्नास्थान्विदित्वा देव्य उपतिष्ठन्ते । ता स्पृष्ट्वैव च ते प्रीतिमुपलभन्ते विनिवृत्तास्थाश्च भवन्ति ॥ तथा ब्रह्मलोकलान्तकयोर्देवानेवभूतोत्पन्नास्थान्विदित्वा देव्यो दिव्यानि स्वभावभास्वराणि सर्वाङ्गमनोहराणि शृङ्गारोदाराभिजाताकारविलासान्युज्ज्वलचारुवेषाभरणानि स्वानि रूपाणि दर्शयन्ति । तानि दृष्ट्वैव ते प्रीतिमुपलभन्ते निवृत्तास्थाश्च भवन्ति ॥ तथा महाशुक्रसहस्रारयोर्देवानुत्पन्नप्रवीचारास्थान्विदित्वा देव्य श्रुतिविषयसुखानत्यन्तमनोहराञ् शृङ्गारोदाराभिजातविलासाभिलापच्छेदतलतालाभरणरवमिश्रान्हसितकथितगीतशब्दानुदीरयन्ति । तान् श्रुत्वैव ते प्रीतिमुपलभन्ते निवृत्तास्थाश्च भवन्ति ॥ आनतप्राणतारणाच्युतकल्पवासिनो देवा प्रवीचारायोत्पन्नास्था देवी सङ्कल्पयन्ति सङ्कल्पमात्रेणैव ते परा प्रीतिमुपलभन्ते विनिवृत्तास्थाश्च भवन्ति ॥ एभिश्च प्रवीचारैः परत॰ परत॰ प्रीतिप्रकर्षविशेषोऽनुपमगुणो भवति प्रवीचारिणामल्पसंक्लेशत्वात् । स्थितिप्रभावाभिरधिका इति वर्त्स्यते ॥ ९ ॥

---

१ अ ४ सू २१

## परेऽप्रवीचाराः ॥ १० ॥

कल्पोपपन्नेभ्य[1] परे देवा अप्रवीचारा भवन्ति । अल्पसंक्लेशत्वात् स्वस्था[2] शीतीभूता । पञ्चविधप्रवीचारोद्भवादपि प्रीतिविशेषादपरिमितगुणप्रीतिप्रकर्षा परमसुखतृप्ता एव भवन्ति ॥ १० ॥

अत्राह । उक्तं भवता देवाश्चतुर्निकाया दशाष्टपञ्चद्वादशविकल्पा इत्युक्ते निकाया[3] के के चैषां विकल्पा इति । अत्रोच्यते । चत्वारो देवनिकायाः । तद्यथा । भवनवासिनो व्यन्तरा ज्योतिष्का वैमानिका इति ॥

तत्र—

## भवनवासिनोऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमाराः ॥ ११ ॥

प्रथमो देवनिकायो भवनवासिनः । इमानि चैषां विधानानि भवन्ति । तद्यथा–१ असुरकुमारा २ नागकुमारा ३ विद्युत्कुमारा, ४ सुपर्णकुमारा ५ अग्निकुमारा ६ वातकुमारा, ७ स्तनितकुमारा ८ उदधिकुमारा ९ द्वीपकुमारा १० दिक्कुमारा इति । कुमारवदेते कान्तदर्शनाः सुकुमारा मृदुमधुरललितगतयः शृङ्गाराभिजातरूपविक्रियाः कुमारवच्चोद्धतरूपवेषभाषाभरणप्रहरणावरणयानवाहनाः, कुमारवच्चोल्बणरागाः क्रीडनपराश्चेत्यतः कुमारा इत्युच्यन्ते । असुरकुमारा वासेष्वसुरकुमारा[3] प्रतिवसन्ति शेषास्तु भवनेषु । महामन्दरस्य दक्षिणोत्तरयोर्दिग्विभागयोर्बह्वीषु योजनशतसहस्रकोटीकोटीष्वावासा भवनानि च दक्षिणार्धाधिपतीनामुत्तरार्धाधिपतीनां च यथास्व

---

१ परे–कल्पातीता । अ ४ सू २४

२ उदित्तस्नेहा[?] ।

३ प्रायस्तु नागादयो भवनेष्वेव प्रायो वसन्ति नावासेषु । तानि च भवनानि परिवृत्तान्यन्तश्चतुरस्राणि अध पुष्करकर्णिकासंस्थानानि ।

भवन्ति। तत्र भवनानि रत्नप्रभाया बाहल्यार्धमवगाह्य मध्ये भवन्ति। भवनेषु वसन्तीति भवनवासिन ॥

भवप्रत्ययाश्चैषामिमा नामकर्मनियमात्स्वजातिविशेषनियता विक्रिया भवन्ति । तद्यथा । गम्भीरा श्रीमन्तः काला महाकाया रत्नोत्कटमुकुटभास्वराश्चूडामणिचिह्ना असुरकुमारा भवन्ति । शिरोमुखेष्वधिकप्रतिरूपा कृष्णश्यामा मृदुललितगतय शिरस्सु फणिचिह्ना नागकुमारा' । स्निग्धा भ्राजिष्णवोऽवदाता वज्रचिह्ना विद्युत्कुमारा अधिकरूपग्रीवोरस्काः श्यामावदाता गरुडचिह्ना सुपर्णकुमारा' । मानोन्मानप्रमाणयुक्ता भास्वन्तोऽवदाता घटचिह्ना अग्निकुमारा भवन्ति । स्थिरपीनवृत्तगात्रा निमग्नोदरा अश्वचिह्ना अवदाता वातकुमारा । स्निग्धा स्निग्धगम्भीरानुनादमहास्वना कृष्णा वर्धमानचिह्ना स्तनितकुमारा । ऊरुकटिष्वधिकप्रतिरूपा कृष्णश्यामा मकरचिह्ना उदधिकुमारा' । उरःस्कन्धबाहुग्रहस्तेष्वधिकप्रतिरूपाः श्यामावदाताः सिंहचिह्ना द्वीपकुमारा । जङ्घाग्रपादेष्वधिकप्रतिरूपा श्यामा हस्तिचिह्ना दिक्कुमारा । सर्वे विविधवस्त्राभरणप्रहरणावरणा भवन्तीति ॥ ११ ॥

व्यन्तरा' किन्नरकिम्पुरुषमहोरगगन्धर्वयक्षराक्षसभूतपिशाचाः ॥१२॥

अष्टविधो द्वितीयो देवनिकाय' । एतानि चास्य विधानानि भवन्ति । अधस्तिर्यगूर्ध्वं च त्रिष्वपि लोकेषु भवननगरेष्वावासेषु

---

१ तस्मिन्नेव स्थाने नवतिसहस्राण्यधोऽवगाह्य । आवासास्तु सहस्रद्वयपरिवर्जिताया रत्नप्रभाया सर्वत्रेत्यभिप्राय ।

२ बहलस्य भाव बाहल्यम् । अधशब्दो न्यूनत्ववाची ।

च प्रतिवसन्ति । यस्माच्चाधस्तिर्यगूर्ध्वं च त्रीनपि लोकान् स्पृशन्तः स्वातन्त्र्यात्पराभियोगाच्च प्रायेण प्रतिपतन्त्यनियतगतिप्रचारा मनुष्यानपि केचिद्भृत्यवदुपचरन्ति विविधेषु च शैलकन्दरान्तरवनविवरादिषु प्रतिवसन्त्यतो व्यन्तरा इत्युच्यन्ते ।

तत्र किन्नरा दशविधाः । तद्यथा—१ किन्नरा २ किम्पुरुषाः ३ किम्पुरुषोत्तमा ४ किन्नरोत्तमा ५ हृदयगमा ६ रूपशालिनो ७ ऽनिन्दिता ८ मनोरमा ९ रतिप्रिया १० रतिश्रेष्ठा इति ॥ किम्पुरुषा दशविधाः । तद्यथा-१ पुरुषा, २सत्पुरुषा ३महापुरुषा, ४ पुरुषवृषभाः ५ पुरुषोत्तमा ६ अतिपुरुषा ७ मरुदेवा ८ मरुतो ९ मेरुप्रभा १० यशस्वन्त इति ॥ महोरगा दशविधा । तद्यथा—१ भुजगा २ भोगशालिनो ३ महाकाया ४ अतिकाया, ५ स्कन्धशालिनो ६ मनोरमा ७ महावेगा ८ महेष्वक्षा ९ मेरुकान्ता १० भास्वन्त इति ॥ गान्धर्वा द्वादशविधाः । तद्यथा—१ हाहा २ हूहू ३ तुम्बुरवो ४ नारदा ५ ऋषिवादिका ६ भूतवादिका ७ कादम्बा ८ महाकादम्बा ९ रैवता १०विश्वावसवो ११गीतरतयो १२ गीतयशस इति ॥ यक्षास्त्रयोदशविधा । तद्यथा— १ पूर्णभद्रा २ माणिभद्रा ३ श्वेतभद्रा ४ हरिभद्राः ५ सुमनोभद्रा ६ व्यतिपातिकभद्रा ७ सुभद्रा ८ सर्वतोभद्रा ९ मनुष्ययक्षा १० वनाधिपतयो ११ वनाहारा १२ रूपयक्षा १३ यक्षोत्तमा इति ॥ सप्तविधा राक्षसा । तद्यथा—१ भीमा २ महाभीमा ३ विघ्ना ४ विनायका ५ जलराक्षसा ६ राक्षसराक्षसा ७ ब्रह्मराक्षसा इति ॥ भूता नवविधाः । तद्यथा– १ सुरूपा २ प्रतिरूपा ३ अतिरूपा ४ भूतोत्तमा ५ स्कन्दिका ६ महास्कन्दिका ७ महावेगा ८ प्रतिच्छन्ना ९ आकाशगा इति ॥ पिशाचा पञ्चदशविधा । तद्यथा—१ कूष्माण्डा २ पटका ३ जोषा ४ आह्नका ५ काला ६ महाकाला

७ क्ष्मौक्षा ८ अक्षौक्षा ९ स्थालपिशाचा १० मुखरपिशाचा ११ अधस्तारका १२ देहा १३ महाविदेहा १४ तूष्णीका १५ वन-पिशाचा इति ॥

तत्र किन्नरा प्रियङ्गुश्यामा सौम्या सौम्यदर्शना मुखेष्वधिकरूपशोभा मुकुटमौलिभूषणा अशोकवृक्षध्वजा अवदाताः। किम्पुरुषा ऊरुबाहुष्वधिकशोभा मुखेष्वधिकभास्वरा विविधाभरण-भूषणाश्चित्रस्रगनुलेपनाश्चम्पकवृक्षध्वजा ॥ महोरगा श्यामावदाता महावेगाः सौम्या सौम्यदर्शना महाकाया पृथुपीनस्कन्धग्रीवा विविधानुविलेपना विचित्राभरणभूषणा नागवृक्षध्वजा । गान्धर्वा रक्तावदाता गम्भीराः प्रियदर्शना सुरूपा सुमुखाकारा सुस्वरा मौलिधरा हारविभूषणास्तुम्बुरुवृक्षध्वजा । यक्षाः श्यामावदाता गम्भीरास्तुन्दिला वृन्दारका. प्रियदर्शना मानोन्मानप्रमाणयुक्ता रक्तपाणिपादतलनखतालुजिह्वौष्ठा भास्वरमुकुटधरा नानारत्नविभू-षणा वटवृक्षध्वजा. । राक्षसा अवदाता भीमा भीमदर्शना शिर -करालाः रक्तलम्बौष्ठास्तपनीयविभूषणा नानाभक्तिविलेपनाः खट्वाङ्गध्वजा । भूता श्यामा सुरूपा सौम्या आपीवरा नानाभक्ति विलेपना सुलसध्वजाः काला । पिशाचा सुरूपा. सौम्यदर्शना हस्तग्रीवासु मणिरत्नविभूषणा कदम्बवृक्षध्वजा । इत्येवमकारस्व भावानि वैक्रियाणि रूपचिह्नानि व्यन्तरगणा भवन्तीति ॥ १२ ॥

तृतीयो देवनिकायः—

ज्योतिष्काः सूर्याश्चन्द्रमसो ग्रहनक्षत्रप्रकीर्णतारकाश्च॥१३॥

ज्योतिष्काः पञ्चविधा भवन्ति । तद्यथा—१ सूर्या २ श्चन्द्र-मसो ३ ग्रहा ४ नक्षत्राणि ५ प्रकीर्णतारका इति पञ्चविधा ज्यो तिष्का इति । असमासकरणमार्षाच्च सूर्याचन्द्रमसो क्रमभेद कृत यथा गम्येतैतदेवैषामूर्ध्वनिवेश आनुपूर्व्यमिति । तद्यथा—सर्वाध-

स्तात्सूर्यास्ततश्चन्द्रमसस्ततो ग्रहास्ततो नक्षत्राणि ततोऽपि प्रकीर्णतारा.। ताराग्रहास्त्वनियतचारित्वात्सूर्यचन्द्रमसामूर्ध्वमधश्च चरन्ति। सूर्येभ्यो दशयोजनावलम्बिनो भवन्तीति । समाद्भूमिभागादष्टसु योजनशतेषु सूर्यास्ततो योजनानामशीत्या चन्द्रमसस्ततो विंशत्या तारा इति । द्योतयन्त इति ज्योतींषि विमानानि तेषु भवा ज्योतिष्का ज्योतिषो वा देवा ज्योतिरेव वा ज्योतिष्का[1] । मुकुटेषु शिरोमुकुटोपगूहितै प्रभामण्डलकल्पैरुज्ज्वलै. सूर्यचन्द्रतारामण्डलैर्यथास्व चिह्नै विराजमाना द्युतिमन्तो ज्योतिष्का भवन्तीति ॥ १३ ॥

## मेरुप्रदक्षिणानित्यगतयो नृलोके[2] ॥ १४ ॥

मानुषोत्तरपर्यन्तो मनुष्यलोक इत्युक्तम्[3] । तस्मिन् ज्योतिष्का मेरुप्रदक्षिणानित्यगतयो भ्रमन्ति । मेरो प्रदक्षिणा नित्या गतिरेषामिति मेरुप्रदक्षिणानित्यगतय. । एकादशस्वेकविंशेषु योजनशतेषु मेरोश्चतुर्दिश प्रदक्षिण चरन्ति । तत्र द्वौ सूर्यौ जम्बूद्वीपे, लवणजले चत्वारो,धातकीखण्डे द्वादश, कालोदे द्वाचत्वारिंशत्, पुष्करार्धे द्विसप्ततिरित्येव मनुष्यलोके द्वात्रिंशत्सूर्यशत भवति । चन्द्रमसामप्येष एव विधि । अष्टाविंशतिर्नक्षत्राणि, अष्टाशीतिर्ग्रहा , षट्षष्टि. सहस्राणि

---

१ अत्यन्तप्रकाशकारित्वात् ज्योति शब्दाभिधेयानि विमानानि ।

२ जम्बूद्वीप ( ३–९ ) धातकीखण्डपुष्करवरद्वीपार्धरूपा द्वीपा द्वौ च लवणो दधिकालोदधिरूपौ समुद्रौ मानुष क्षेत्र मनुष्याणामुत्पत्तिमरणस्य च भावात् । अस्मिश्च मानुषे क्षेत्रे समा विभागा कालविभागा सुषमसुषमादयो[४–१५] भवन्ति । ततो मनुष्यक्षेत्रात्परत सर्वमपि देवारण्य देवाना क्रीडास्थान तत्र जन्मतो मनुष्या नापि तत्र कोऽपि कालविभाग इत्यर्थ ।

३ अ ३ सू १४

४ तत्र द्वात्रिंश शत एव सूर्याणामपि द्वात्रिंश शत परिभावनीयम् । ( जी ३ प्रति )

५ एकैकस्य शशिन तारापरिवार कोटीकोटीना षट्षष्टि सहस्राणि नव शतानि पञ्चसप्तत्यधिकानि । सूय १९ प्रा ॥





द्वौ सुर्यौ जम्बूद्वीपे । इमे च तयोर्भ्रमणरेखे । एव चतुर्द्वादश-
प्रभृतीना सूर्याणा रेखा ज्ञेया । पृ ९७

नव शतानि पञ्चसप्ततानि तारा कोटीकोटीनामेकैकस्य चन्द्रमसः परिग्रहः। सूर्याश्चन्द्रमसो ग्रहा नक्षत्राणि च तिर्यग्लोके, शेपास्तूर्ध्वलोके ज्योतिष्का भवन्ति। अष्टचत्वारिंशद्योजनैकषष्टिभागा सूर्यमण्डलविष्कम्भः, चन्द्रमसः षट्पञ्चाशद्, ग्रहाणामर्धयोजनं, गव्यूतं नक्षत्राणां, सर्वोत्कृष्टायास्ताराया अर्धक्रोशो, जघन्यायाः पञ्चधनुःशतानि। विष्कम्भार्धबाहल्याश्च भवन्ति। सर्वे सूर्योदयो नृलोक इति वर्तते। बहिस्तु विष्कम्भबाहल्याभ्यामतोऽर्धे भवन्ति॥ एतानि च ज्योतिष्कविमानानि लोकस्थित्या प्रसक्तावस्थितगतीन्यपि ऋद्धिविशेषार्थमाभियोग्यनामकर्मोदयाच्च नित्यगतिरतयो देवा वहन्ति। तद्यथा—पुरस्तात्केसरिणो, दक्षिणतः कुञ्जरा, अपरतो वृषभा, उत्तरतो जविनोऽश्वा इति॥ १४॥

तत्कृतः कालविभागः॥ १५॥

कालोऽनन्तसमयो वर्तनादिलक्षण इत्युक्तम्। तस्य विभागो ज्योतिष्काणां गतिविशेषकृतश्चारविशेषेण हेतुना। तैः कृतस्तत्कृतः। तद्यथा—अणुभागाश्चारा अंशाः कलालवा नालिका मुहूर्ता दिवसरात्रय पक्षा मासा ऋतवोऽयनानि संवत्सरा युगमिति लौकिकसमो विभागः॥ पुनरन्यो विकल्पः प्रत्युत्पन्नोऽतीतोऽनागत इति त्रिविधः॥ पुनस्त्रिविधः परिभाष्यते सङ्ख्येयोऽसङ्ख्येयोऽनन्त इति॥

---

१ सूर्यमण्डलस्य विष्कम्भ अष्टचत्वारिंशदेकषष्टिभागा योजनस्य (ज ७ वक्ष)

२ सर्वे चैते षोडशसहस्रसंख्या देवा सावितुर्विमानं वहन्ति। तथा चन्द्रमसः। एवं विमानवहनसमया देवा पूर्वदक्षिणपश्चिमोत्तरादिक्षु यथाक्रमं केसरिकुञ्जरवृषभाश्वरूपाणि धारयन्ति।

३ च ५ सू ३९

४ अ ५ सू २२

५ प्रत्युत्पन्न —वर्तमानः।

तत्र परमसूक्ष्मक्रियस्य सर्वजघन्यगतिपरिणतस्य परमाणोः स्वावगाहनक्षेत्रव्यतिक्रमकाल समय इत्युच्यते परमदुरधिगमोऽनिर्देश्य । त हि भगवन्त' परमर्षय' केवलिनो विदन्ति न तु निर्दिशन्ति परमनिरुद्धत्वात् । परमनिरुद्धे हि तस्मिन् भाषाद्रव्याणा ग्रहणनिसर्गयो' करणप्रयोगासम्भव इति । ते त्वसङ्ख्येया आवलिका । ता' सङ्ख्येया उच्छ्वासस्तथा नि'श्वास' । तौ बलवत' पट्विन्द्रियस्य कल्यस्य मध्यमवयस. स्वस्थमनस' पुसः प्राण । ते सप्त स्तोक' । ते सप्त लव । तेऽष्टात्रिंशदर्ध च नालिका । ते द्वे मुहूर्तः । ते त्रिंशदहोरात्रम् । तानि पञ्चदश पक्ष' । तौ द्वौ शुक्लकृष्णो मासः । तौ द्वौ मासावृतु' । ते त्रयोऽयनम् ते द्वे सवत्सर । ते पञ्च चन्द्रचन्द्राभिवर्धितचन्द्राभिवर्धिताख्या युगम् । तन्म'येऽन्ते चाधिकमासकौ । सूर्यसवनचन्द्रनक्षत्राभिवर्धितानि युगनामानि । वर्षशतसहस्र चतुरशीतिगुणित पूर्वाङ्गम् । पूर्वाङ्गशतसहस्र चतुरशीतिगुणित पूर्वम् । एत तान्ययुतकमलनलिनकुमुदतुटटावता हाहाहूहूचतुरशीतिशतसहस्रगुणा सङ्ख्येय काल । अत ऊर्ध्वमुपमानियत वक्ष्याम' । तद्यथा हि नाम योजनाविस्तीर्ण योजनोच्छ्राय वृत्त पल्यमेकरात्राद्युत्कृष्टसप्तरात्रजातानामङ्गलोम्नां गाढ पूर्ण स्याद्वर्षशता देकैकस्मिन्नुद्ध्रियमाणे यावता कालेन तद्रिक्तं स्यादेतत्पल्योपमम् । तद्दशभि कोटीकोटिभिर्गुणित सागरोपमम् । तेषा कोटीकोटयश्च तस्र सुषमसुषमा । तिस्र सुषमा । द्वे सुषमदु षमा । द्विचत्वारिंश द्वर्षसहस्राणि हित्वा एका दु षमसुषमा । वर्षसहस्राणि एकविंशति र्दु षमा । तावत्येव दुःषमदुषमा । ता अनुलोमप्रतिलोमा अवसर्पि-

१ प्रथमद्वितीयौ सवत्सरौ चान्द्रौ ज्ञातव्यौ, तृतीयसवत्सर अभिवर्धित जानीहि, चतुर्थसवत्सर भूयश्चान्द्रमेव जानीहि, पचममभिवर्धितम् । अत्र ये चान्द्रा सवत्सरा ते द्वाद'शमासिका ये तु द्वौ अभिवर्धिताख्यौ सवत्सरौ तौ त्रयोदशमासिकौ चान्द्रमास प्रमाणेन ।




आराचक्रम् । पृ ९५

आभ्या कालस्यारोहावरोहक्रमौ ज्ञायेते ।

ण्युत्सर्पिण्यौ भरतैरावतेष्वनाद्यनन्त परिवर्तेतेऽहोरात्रवत् । तयो. शरीरायु शुभपरिणामानामनन्तगुणहानिवृद्धी अशुभपरिणामवृद्धि-हानी । अवस्थितावस्थितगुणा चैकैकान्यत्र । तद्यथा—कुरपु सुषम-सुषमा, हरिरम्यकवासेषु सुषमा, हैमवतहैरण्यवतेषु सुषमदु षमा, विदेहेषु सान्तरद्वीपेषु दु षमसुषमा, इत्येवमादिर्मनुष्यक्षेत्रे पर्यायपरिकालविभागो ज्ञेय इति ॥ १५ ॥

बहिरवस्थिता॰ ॥ १६ ॥

नृलोकाद्बहिर्ज्योतिष्का अवस्थिता । अवस्थिता इत्यविचारिणोऽवस्थितविमानप्रदेशा अवस्थितलेश्याप्रकाशा इत्यर्थ. । सुखशीतोष्णरश्मयश्चेति ॥ १६ ॥

वैमानिका: ॥ १७ ॥

चतुर्थो देवनिकायो वैमानिका । तेऽत ऊर्ध्वं वक्ष्यन्ते । विमानेषु भवा वैमानिकाः ॥ १७ ॥

कल्पोपपन्ना कल्पातीताश्च ॥ १८ ॥

द्विविधा वैमानिका देवा । कल्पोपपन्ना कल्पातीताश्च । तान परस्ताद्वक्ष्याम इति ॥ १८ ॥

उपर्युपरि ॥ १९ ॥

---

१ लेश्या वर्ण स नृलोकान्तर्वर्तिनामुपरागादिभिरन्यत्वमपि प्रतिपद्यते । तद्बहिर्वर्तिना तु तदभावादवस्थितपीतवर्णत्वम् । प्रकाशोऽप्यवस्थितस्तेषा लोकान्तरपरिमाणो निष्कम्पत्वादस्तमनोदयाभावाच्चेति ।

२ अ ४ स २०

३ सौधर्मादिकल्पातीता ।

४ उपरिष्ठा सर्वग्रैवेयकविमानपञ्चकाधिवासिन ।

५ अ ४ सु २४

उपर्युपरि च यथानिर्देश वेदितव्या. । नैकक्षेत्रे नापि तिर्यगधो वेति ॥ १९ ॥

सौधर्मैशानसानत्कुमारमाहेन्द्रब्रह्मलोकलान्तक-
महाशुक्रसहस्रारेष्वानतप्राणतयोरारणाच्युतयोर्नवसु
ग्रैवेयेषु विजयवैजयन्तजयन्तापराजितेषु सर्वार्थ-
सिद्धे च ॥ २० ॥

एतेषु सौधर्मादिषु कल्पविमानेषु वैमानिका देवा भवन्ति । तद्यथा—सौधर्मस्य कल्पस्योपर्यैशानः कल्प । ऐशानस्योपरि सानत्कुमार. । सानत्कुमारस्योपरि माहेन्द्र इत्येवमासर्वार्थसिद्धादिति॥ सुधर्मा नाम शक्रस्य देवेन्द्रस्य सभा । सा तस्मिन्नस्तीति सौधर्म' कल्प' । ईशानस्य देवराजस्य निवास ऐशान इत्येवमिन्द्राणा निवास योग्याभिख्या' सर्वे कल्पा' ॥ ग्रैवेयास्तु लोकपुरषस्य ग्रीवाप्रदेशविनिविष्टा ग्रीवाभरणभूता ग्रैवा ग्रीव्या ग्रैवेया ग्रैवेयका इति ॥ अनुत्तरा पञ्च देवनामान एव । विजिता अभ्युदयविघ्नहेतव एभिरिति विजयवैजयन्तजयन्ता । तैरेव विघ्नहेतुभिर्न पराजिता अपराजिता । सर्वेष्वभ्युदयार्थेषु सिद्धाः सर्वार्थैश्च सिद्धा सर्वे चैषामभ्युदयार्था सिद्धा इति सर्वार्थसिद्धा । विजितप्रायाणि वा कर्माण्येभिरुपस्थितभद्रा. परीषहैरपराजिता सर्वार्थेषु सिद्धा सिद्धप्रायोत्तमार्था इति, विजयान्य इति ॥२०॥

स्थितिप्रभावसुखद्युतिलेश्याविशुद्धीन्द्रियावधिविषयतोऽ-
धिका' ॥ २१ ॥

यथाक्रम चैतेषु सौधर्मादिषूपर्युपरि देवा पूर्वत पूर्वत एभिः स्थित्यादिभिरर्थैराधिका भवन्ति ॥ तत्र स्थितिरुत्कृष्टा जघन्या च

१ अ ९ सू ९

परस्ताद्वक्ष्यते। इह तु वचने प्रयोजनं येषामपि समा भवति तेषामप्युपर्युपरि गुणाधिका भवतीति यथा प्रतीयेत। प्रभावतोऽधिकाः। यः प्रभावो निग्रहानुग्रहविक्रियापराभियोगादिषु सौधर्मकाणां सोऽनन्तगुणाधिक उपर्युपरि। मन्दाभिमानतया त्वल्पतरसङ्क्लिष्टत्वादेते न प्रवर्तन्त इति॥ क्षेत्रस्वभावजनितान्च शुभपुद्गलपरिणामात्सुखतो द्युतितश्चानन्तगुणप्रकर्षेणाधिकाः॥ लेश्याविशुद्ध्याधिकाः। लेश्यानियमः परस्तादेषां वक्ष्यते। इह तु वचने प्रयोजनं यथा गम्येत यत्रापि विधानतस्तुल्यास्तत्रापि विशुद्धितोऽधिका भवन्तीति। कर्मविशुद्धित एव वाधिका भवन्तीति॥ इन्द्रियविषयतोऽधिकाः। यदिन्द्रियपाटवं दूरादिष्टविषयोपलब्धौ सौधर्मदेवानां तत्प्रकृष्टतरगुणत्वादल्पतरसङ्क्लेशत्वाच्चाधिकमुपर्युपरीति। अवधिविषयतोऽधिकाः सौधर्मैशानयोर्देवा अवधिविषयेणाधो रत्नप्रभां पश्यन्ति तिर्यगसङ्ख्येयानि योजनसहस्राण्यूर्ध्वमास्वभवनात्। सानत्कुमारमाहेन्द्रयोः शर्कराप्रभां पश्यन्ति तिर्यगसङ्ख्येयानि योजनशतसहस्राण्यूर्ध्वमास्वभवनात्। इत्येवं शेषाः क्रमशः। अनुत्तरविमानवासिनस्तु कृत्स्नां लोकनालिं पश्यन्ति। येषामपि क्षेत्रतस्तुल्योऽवधिविषयः तेषामप्युपर्युपरि विशुद्धितोऽधिको भवतीति॥ २१॥

गतिशरीरपरिग्रहाभिमानतो हीनाः॥ २२॥

गतिविषयेण शरीरमहत्त्वेन महापरिग्रहत्वेनाभिमानेन चोपर्युपरि हीनाः। तद्यथा—द्विसागरोपमजघन्यस्थितीनां देवानामा सप्तम्यां गतिविषयस्तिर्यगसङ्ख्येयानि योजनकोटीकोटीसहस्राणि।

---

१ अ ४ सू २१ इत्यत पर सू ४२ इति यावत्।

२ अ ४ सू २३

३ चतुर्दशरज्ज्वात्मकलोकमध्यवर्तिनीम्।

तत. परतो जघन्यस्थितीनामैरैश्वदीना भूमयो यावत्तृतीयेति। गतपूर्वाश्च गमिष्यन्ति च तृतीया देवा. परतस्तु सत्यपि गतिविषये न गतपूर्वा नापि गमिष्यन्ति। महानुभावक्रियात: औदासीन्या च्चोपर्युपरि देवा न गतिरतयो भवन्ति॥ सौधर्मैशानयो कल्पयो-र्देवाना शरीरोच्छ्राय सप्तारत्नय[2]। उपर्युपरि द्वयोर्द्वयोरेकारत्निर्हीना आसहस्रारात्। आनतादिषु तिस्र.। ग्रैवेयकेषु द्वे। अनुत्तरे एका इति॥ सौधर्मे विमानाना द्वात्रिंशच्छतसहस्राणि। ऐशानेऽष्टाविंश-ति.। सानत्कुमारे द्वादश। माहेन्द्रेऽष्टौ। ब्रह्मलोके चत्वारि शतस हस्राणि। लान्तके पञ्चाशत्सहस्राणि। महाशुक्रे चत्वारिंशत्। सह स्रारे षट्। आनतप्राणतारणाच्युतेषु सप्तशतानि। अधोग्रैवेयकाणा शतमेकादशोत्तरम्। मध्ये सप्तोत्तरम्। उपर्येकमेव शतम्। अनुत्तरा पञ्चैवेति। एवमूर्ध्वलोके वैमानिकाना सर्वविमानपरिसङ्ख्या चतुर-शीति शतसहस्राणि सप्तनवतिश्च सहस्राणि त्रयोविंशानीति। स्थान परिवारशक्तिविषयसपत्स्थितिष्वल्पाभिमाना परमसुखभागिन उप-र्युपरीति॥

उच्छ्वासाहारवेदनोपपातानुभावतश्च साध्या[1]।

उच्छ्वास: सर्वजघन्यस्थितीना देवानां सप्तसु स्तोकेषु आ-हारश्चतुर्थकाल[1]। पल्योपमस्थितीनामन्तर्दिवसस्योच्छ्वासो दिवस पृथक्त्वस्याहार[4]। यस्य यावन्ति सागरोपमानि स्थितिस्तस्य ताव त्स्वर्धमासेषूच्छ्वासस्तावत्स्वेव वर्षसहस्रेष्वाहार॥ देवाना सद्वेद-

१ जिनाभिवन्दनादीन्मुक्त्वा।

२ अरत्नि –निष्कनिष्ठमुष्टिहस्त (ज २ व १०) 'सप्त रत्नय' इत्यपि पाठ।

३ स्थान–कल्पादि। परिवारो देवा देव्यश्च। शक्ति सामर्थ्यमचिन्त्यम्। विषयोऽवधेरिन्द्रियाणा वा। सपद्विभूति। स्थितिरायुष इयत्ता। अथवा विषयसपत् शब्दादिसमृद्धि।

४ द्विप्रभृत्यानवभ्य पृथक्त्वसज्ञा पारिभाषिकी।

# चित्रगताङ्कानां स्पष्टीकरणम् ।



१ विमानैरागच्छन्तो ज्योतिष्कदेवा ।

२ समवसरणम् ।

३ मृगाङ्कयक्ष ।

४ श्रीवीरस्वामी ।

५ गणधर ।

६ सिद्धायिका देवी ।

७ मुनिपरिवार ।

८ साध्वीसमूह ।

९ वैमानिकदेवा ।

१० धर्मचक्रम् ।

११ मुनी ।

१३ भवनवासिदेवा ।

१४ व्यन्तरदेवा ।

१५ इन्द्रध्वज ।

ना. प्रायेण भवन्ति न कदाचिदसद्वेदना. । यदि चासद्वेदना भवन्ति ततोऽन्तर्मुहूर्तमेव भवन्ति न परतोऽनुबद्धा सद्वेदनास्तूत्कृष्टेन षण्मासान भवन्ति ॥ उपपातः । आरणाच्युतादूर्ध्वमन्यतीर्थानामुपपातो न भवति । स्वलिङ्गिना भिन्नदर्शनानामाग्रैवेयकेभ्य उपपात । अन्यस्य सम्यग्दृष्टे सयतस्य भजनीय आसर्वार्थसिद्धात् । ब्रह्मलोकादूर्ध्वमासर्वार्थसिद्धाच्चतुर्दशपूर्वधराणामिति ॥ अनुभावो विमानाना सिद्धिक्षेत्रस्य चाकाशे निरालम्बावस्थितो लोकस्थितिरेव हेतु* । लोकस्थितिर्लोकानुभावो लोकस्वभावो जगद्धर्मोऽनादिपारिणामसन्तति रित्यर्थ । सर्वे च देवेन्द्रा ग्रैवेयादिषु च देवा भगवता परमर्षीणामर्हतां जन्माभिषेकनिष्क्रमणज्ञानोत्पत्तिमहासमवसरणनिर्वाणकालेष्वासीना शयिताः स्थिता वा सहसैवासनशयनस्थानाश्रयै. प्रचलन्ति । शुभकर्मफलोदयाल्लोकानुभावत एव वा । ततो जनितोपयोगास्ता भगवतामनन्यसदृशीं तीर्थकरनामकर्मोद्भवा धर्मविभूतिमवधिनालोक्य सजातसवेगा सद्धर्मबहुमानात्केचिदागत्य भगवत्पादमूल स्तुतिवन्दनोपासनहितश्रवणैरात्मानुग्रहमाप्नुवन्ति । केचिदपि तत्रस्था एव प्रत्युपस्थापनाञ्जलिप्रणिपातनमस्कारोपहारै परमसविग्ना सद्धर्मानुरागोत्फुल्लनयनवदना समभ्यर्चयन्ति ॥ २२ ॥

पीतपद्मशुक्ललेश्या द्वित्रिशेषेषु ॥ २३ ॥

उपर्युपरि वैमानिका सौधर्मादिषु द्वयोस्त्रिषु शेषेषु च पीतपद्मशुक्ललेश्या भवन्ति यथासङ्ख्यम् । द्वयो पीतलेश्या सौधर्मैशानयो* त्रिषु पद्मलेश्या सानत्कुमारमाहेन्द्रब्रह्मलोकेषु । शेषेषु लान्तकादिष्वासर्वार्थसिद्धाच्छुक्ललेश्या* । उपर्युपरि तु विशुद्धतरेत्युक्तम् ॥ २३ ॥

---

* ... नाना परिणामा जीवा ... [illegible]

अत्राह। उक्तं भवता द्विविधा वैमानिका देवा 'कल्पोपपन्नाः कल्पातीताश्च' (४ १८) इति। तत् के कल्पा इति। अत्रोच्यते—

प्राग्ग्रैवेयकेभ्यः कल्पाः ॥ २४ ॥

प्राग्ग्रैवेयकेभ्यः कल्पा भवन्ति सौधर्मादय आरणाच्युतपर्यन्ता इत्यर्थः। अतोऽन्ये कल्पातीता. ॥

अत्राह। किं देवा सर्वे एव सम्यग्दृष्टयो यद्भगवतां परमर्षीणामर्हतां जन्मादिषु प्रमुदिता भवन्ति इति। अत्रोच्यते। न सर्वे सम्यग्दृष्टय. किं तु सम्यग्दृष्टय. सद्धर्मबहुमानादेव तत्र प्रमुदिता भवन्त्यभिगच्छन्ति च। मिथ्यादृष्टयोऽपि च लोकचित्तानुरोधादिन्द्रानुवृत्त्या परस्परदर्शनात् पूर्वानुचरितमिति च प्रमोदं भजन्तेऽभिगच्छन्ति च। लोकान्तिकास्तु सर्वे एव विशुद्धभावाः सद्धर्मबहुमानात्ससारदु·खार्त्तानां च सत्त्वानामनुकम्पया भगवतां परमर्षीणामर्हतां जन्मादिषु विशेषत. प्रमुदिता भवन्ति। अभिनि.क्रमणाय च कृतसङ्कल्पान्भगवतोऽभिगम्य प्रहृष्टमनस. स्तुवन्ति सभाजयन्ति चेति ॥ २४ ॥

ब्रह्मलोकालया लोकान्तिकाः ॥ २५ ॥

ब्रह्मलोकालया एव लोकान्तिका भवन्ति नान्यकल्पेषु नापि परतः। ब्रह्मलोकं परिवृत्त्याष्टासु दिक्षु अष्टविकल्पा भवन्ति ॥२५॥

तद्यथा—

१ भवनवासिनो (४ ११), व्यन्तरा (४ १२), ज्योतिष्का (४ १३), सौधर्मादयो द्वादश (४ २०)।

२ (४–२०) सूत्रे नवग्रैवेयकादयो यथोक्ता।

३ लौकान्तिकास्तु सर्वे सम्यग्दृष्टयोऽवश्य चार्हच्चरणमूलपर्यन्तमायान्ति, अर्हदादिसंवेगप्रशमाधमात्महितार्थं च।

सारस्वतादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधमरुतोऽ-
रिष्टाश्च ॥ २६ ॥

एते सारस्वतादयोऽष्टविधा देवा ब्रह्मलोकस्य पूर्वोत्तरादिषु दिक्षु प्रदक्षिणं भवन्ति यथासङ्ख्यम् । तद्यथा—पूर्वोत्तरस्यां दिशि सारस्वताः, पूर्वस्यामादित्याः, इत्येवं शेषाः ॥ २६ ॥

विजयादिषु द्विचरमाः ॥२७॥

विजयादिष्वनुत्तरेषु विमानेषु देवा द्विचरमा भवन्ति । द्विचरमा इति ततश्च्युताः परं द्विर्जनित्वा सिध्यन्तीति । सकृत्सर्वार्थसिद्धमहाविमानवासिनः । शेषास्तु भजनीयाः ॥ २७ ॥

अत्राह । उक्तं भवता जीवस्यौदयिकेषु भावेषु तिर्यग्योनिगतिरिति तथा स्थितौ 'तिर्यग्योनीनां च' इति । आस्रवेषु च 'माया तैर्यग्योनस्य' इति । तत्के तिर्यग्योनय इति । अत्रोच्यते—

---

१ "नवदेवनिकाया पन्नत्ता तंजहा—'१ सारस्सय २ माइच्चा ३ वण्ही ४ वरुणा य ५ गद्दतोया य । ६ तुसिया ७ अव्वाबाहा ८ अग्गिच्चा चेव ९ रिट्ठा य ॥' ॥ १ ॥" इति स्था ९ ठा ६८४ । (स्था ८ ठा तु 'रिट्ठा' इति नवम नाम्नि) मध्यरिष्टान्तवाच्यादिषु लोकान्तिकदेवानां नव निकाया उत्तमचरित्रे दश निकाया कथितास्तत्र मतान्तरमिति ज्ञेयम् ।

२ अत्र दिग्ग्रहणं सामान्येन दिग्विदिक् प्रतिपत्तव्यम् । ब्रह्मलोकाधःस्थितरिष्ट-विमानप्रस्तारवर्तिन्योऽसङ्ख्यातयोजनविस्तृता अरुणवरसागरे समुद्भूता अतिबहलतमःकाय-प्रभवा कृष्णराज्योऽष्टौ भवन्ति । यासां मध्येन प्रयाति देवोऽप्यतिभयेन त्वरितगमनवानेव । तत्र द्वयोर्द्वयोः कृष्णराज्योर्मध्यभाग एते भवन्ति ।

३ सर्वार्थसिद्धविमानवासिनस्तु सकृज्जनित्वा मनुष्येषु सिद्धिमनुगच्छन्ति मुक्ति-मासादयन्ति, सर्वे चानुत्तरविमानवासिनो देवाः परीतसंसारिणो भवन्तीति ।

४ अ २ सू ६
५ अ ३ सू १८
६ अ ६ सू १७

औपपातिकमनुष्येभ्यः शेषास्तिर्यग्योनयः ॥ २८ ॥

औपपातिकेभ्यश्च नारकदेवेभ्यो मनुष्येभ्यश्च यथोक्तेभ्यः शेषा एकेन्द्रियादयस्तिर्यग्योनयो भवन्ति ॥ २८ ॥

अत्राह । तिर्यग्योनिमनुष्याणां स्थितिरुक्ता । अथ देवानां का स्थितिरिति । अत्रोच्यते—

स्थितिः ॥ २९ ॥

स्थितिरित्यत ऊर्ध्वं वक्ष्यते ॥ २९ ॥

भवनेषु दक्षिणार्धाधिपतीनां पल्योपममध्यर्धम् ॥ ३० ॥

भवनेषु तावद्भवनवासिनां दक्षिणार्धाधिपतीनां पल्योपमम-ध्यर्धं परा स्थितिः । द्वयोर्द्वयोर्यथोक्तयोर्भवनवासीन्द्रयोः पूर्वो दक्षिणार्धाधिपतिः पर उत्तरार्धाधिपतिः ॥ ३० ॥

शेषाणां पादोने ॥ ३१ ॥

शेषाणां भवनवासिष्वधिपतीनां द्वे पल्योपमे पादोने परा स्थितिः । ते च शेषा उत्तरार्धाधिपतय इति ॥ ३१ ॥

असुरेन्द्रयोः सागरोपममधिकं च ॥ ३२ ॥

असुरेन्द्रयोस्तु दक्षिणार्धाधिपत्युत्तरार्धाधिपत्योः सागरोपमम-धिकं च यथासङ्ख्यं परा स्थितिर्भवति ॥ ३२ ॥

सौधर्मादिषु यथाक्रमम् ॥ ३३ ॥

सौधर्ममादिं कृत्वा यथाक्रममित ऊर्ध्वं परा स्थितिर्वक्ष्यते॥३३॥

सागरोपमे ॥ ३४॥

सौधर्मे कल्पे देवानां परा स्थितिर्द्वे सागरोपमे इति ॥ ३४ ॥

---

१ अ ३ सू २८

२ दक्षिणार्धाधिपतिः —चमरेन्द्रः । उत्तरार्धाधिपतिः बलीन्द्रः ।

अधिके च ॥३५॥

ऐशाने द्वे एव सागरोपमे अधिके परा स्थितिर्भवति ॥३५॥

सप्त सनत्कुमारे ॥ ३६ ॥

सनत्कुमारे कल्पे सप्त सागरोपमानि परा स्थितिर्भवति ॥३६॥

विशेषत्रिसप्तदशैकादशत्रयोदशपञ्चदशभिरधिकानि च ॥ ३७ ॥

एभिर्विशेषादिभिरधिकानि सप्त माहेन्द्रादिषु परा स्थितिर्भवति। सप्तेति वर्तते। तद्यथा—माहेन्द्रे सप्त विशेषाधिकानि। ब्रह्मलोके त्रिभिरधिकानि सप्त दशेत्यर्थः। लान्तके सप्तभिरधिकानि सप्त चतुर्दशेत्यर्थः। महाशुक्रे दशभिरधिकानि सप्त सप्तदशेत्यर्थः। सहस्रारे एकादशभिरधिकानि सप्त अष्टादशेत्यर्थः। आनतप्राणतयास्त्रयोदशभिरधिकानि सप्त विंशतिरित्यर्थः। आरणाच्युतयोः पञ्चदशभिरधिकानि सप्त द्वाविंशतिरित्यर्थः ॥ ३७॥

आरणाच्युतादूर्ध्वमेकैकेन नवसु ग्रैवेयकेषु विजयादिषु सर्वार्थसिद्धे च ॥ ३८ ॥

आरणाच्युतादूर्ध्वमेकैकेनाधिका स्थितिर्भवति नवसु ग्रैवेयकेषु विजयादिषु सर्वार्थसिद्धे च। आरणाच्युते द्वाविंशतिर्ग्रैवेयकेषु पृथगेकैकेनाधिका त्रयोविंशतिरित्यर्थः। एवमेकैकेनाधिका सर्वेषु नवसु यावत्सर्वेषामुपरि नवमे एकत्रिंशत्। सा विजयादिषु चतुर्ष्वप्येकेनाधिका द्वात्रिंशत्। साप्येकेनाधिका सर्वार्थसिद्धे त्रयस्त्रिंशदिति॥३८॥

अत्राह। मनुष्यतिर्यग्योनिजानां परापरे स्थिती व्याख्याते। अथौपपातिकानां किमेकैव स्थितिः परापरे न विद्येते इति। अत्रोच्यते—

अपरा पल्योपममधिकं च ॥ ३९ ॥

सौधर्मादिष्वेव यथाक्रममपरा स्थितिः पल्योपममधिकं च । अपरा जघन्या निकृष्टेत्यर्थः । परा प्रकृष्टा उत्कृष्टेत्यनर्थान्तरम् । तत्र सौधर्मेऽपरा स्थितिः पल्योपममैशाने पल्योपममधिकं च ॥ ३९ ॥

सागरोपमे ॥ ४० ॥

सनत्कुमारेऽपरा स्थितिर्द्वे सागरोपमे ॥ ४० ॥

अधिके च ॥४१॥

माहेन्द्रे जघन्या स्थितिरधिके द्वे सागरोपमे ॥ ४१ ॥

परतः परतः पूर्वा पूर्वानन्तरा ॥ ४२ ॥

माहेन्द्रात्परतः पूर्वा परानन्तरा जघन्या स्थितिर्भवति। तद्यथा माहेन्द्रे परा स्थितिर्विशेषाधिकानि सप्त सागरोपमानि सा ब्रह्मलोके जघन्या भवति। ब्रह्मलोके दश सागरोपमानि परा स्थितिः सा लान्तके जघन्या। एवमासर्वार्थसिद्धादिति। (विजयादिषु चतुर्षु परा स्थितिस्त्रयस्त्रिंशत्सागरोपमानि सा त्वजघन्योत्कृष्टा सर्वार्थसिद्ध इति)[1] ॥ ४२ ॥

नारकाणां च द्वितीयादिषु ॥ ४३ ॥

नारकाणां च द्वितीयादिषु भूमिषु पूर्वा पूर्वा परा स्थितिरनन्तरा परतः परतोऽपरा भवति। तद्यथा— रत्नप्रभायां नारकाणामेकं सागरोपमं परा स्थितिः सा जघन्या शर्कराप्रभायाम् । त्रीणि सागरोपमानि परा स्थितिः शर्कराप्रभायां सा जघन्या वालुकाप्रभायामिति। एवं सर्वासु। तमःप्रभायां द्वाविंशतिः सागरोपमानि परा स्थितिः सा जघन्या महातमःप्रभायामिति ॥ ४३ ॥

---

१ अयासंगत पाठ ।

दश वर्षसहस्राणि प्रथमायाम् ॥ ४४ ॥

प्रथमाया भूमौ नारकाणा दश वर्षसहस्राणि जघन्या स्थिति॰ ॥ ४४ ॥

भवनेषु च ॥ ४५ ॥

भवनवासिना च दश वर्षसहस्राणि जघन्या स्थिति॰ ॥४५॥

व्यन्तराणां च ॥ ४६ ॥

व्यन्तराणा च देवाना दश वर्षसहस्राणि जघन्या स्थिति॰॥४६॥

परा पल्योपमम् ॥ ४७ ॥

व्यन्तराणा परा स्थिति पल्योपम भवति ॥ ४७ ॥

ज्योतिष्काणामधिकम् ॥ ४८ ॥

ज्योतिष्काणा देवानामधिक पल्योपम परा स्थितिर्भवति॥४८॥

ग्रहाणामेकम् ॥ ४९ ॥

ग्रहाणामेक पल्योपम स्थितिर्भवति ॥ ४९ ॥

नक्षत्राणामर्धम् ॥ ५० ॥

नक्षत्राणां देवाना पल्योपमार्धं परा स्थितिर्भवति ॥ ५० ॥

तारकाणा चतुर्भाग ॥ ५१ ॥

तारकाणा च पल्योपमचतुर्भाग परा स्थिति॰ ॥ ५१ ॥

जघन्या त्वष्टभाग॰ ॥ ५२ ॥

तारकाणा तु जघन्या स्थिति॰ पल्योपमाष्टभागः ॥ ५२ ॥

चतुर्भाग॰ शेषाणाम् ॥ ५३ ॥

तारकाभ्यः शेषाणा ज्योतिष्काणा चतुर्भागः पल्योपमस्या परा स्थिति॰ ॥ ५३ ॥

इति तत्त्वार्थाधिगमसूत्रेषु देवगतिप्रदर्शनो नाम चतुर्थोऽध्यायः ॥ ४ ॥

# अथ पञ्चमोऽध्यायः ।



उक्ता जीवाः । अजीवान्वक्ष्याम ॥

## अजीवकाया धर्माधर्माकाशपुद्गला ॥ १ ॥

धर्मास्तिकायोऽधर्मास्तिकाय आकाशास्तिकाय पुद्गलास्ति-

---

१ जीवो न भवतीत्यजीव इति प्रसज्यप्रतिषेधः । अजीवाना कायाः अजीवकायाः शिलापुत्रकस्य शरीरमित्यभेदेऽपि षष्ठी दृष्टा । तथा सुवर्णस्याङ्गुलीयकम् । अन्यत्वाशङ्काव्यावृत्त्यर्थो वा कर्मधारय एवाभ्युपेयते । अजीवाश्च ते कायाश्चेत्यजीवकायाः । कायशब्द उपसमाधानवचन । प्रदेशानामवयवाना च सामीप्येनान्योन्यानुगत्या सम्यगमेया दया धारणमवस्थानमुपसमाधानम् ।

२ अस्तीत्ययं त्रिकालवचनो निपात । अभूवन् भवन्ति भविष्यन्ति चेति भावना । अतोऽस्ति च ते प्रदेशाना (तत्प्रदेशसम्बन्धत्वे सति अविभागभागविशेषकल्पनारूप प्रदेश ) कायाश्च राशय इति अस्तिशब्देन प्रदेशप्रदेशा प्रचितुच्यन्ते, ततश्च तेषा वा काया अस्तिकाया । स चतुर्धा धर्मास्तिकाय , अधर्मास्तिकाय , आकाशास्तिकाय , पुद्गलास्तिकायश्च । एत एव कालेन सह पञ्च अजीवसामान्यमास्ति जीवेन सह च षड् द्रव्याणीति कथ्यन्ते । १ स्वभावत सञ्चरता जीवपुद्गलाना गमनागमनादिचेष्टासु भाषा मनोवचःकाययोगादिषु मीनाना पानीयमिव यदपेक्षितकारण तद्रूपत्वम्, गतिरूपेण परिणताना जीवपुद्गलाना गतौ यदपेक्षितकारण तद्रूपत्व वा धर्मास्तिकायस्य लक्षणम् । २ स्वभावत स्थितिमता जीवपुद्गलाना, पान्थाना छायास्थलमिव शयननिषदनस्थानलम्बनादिषु यत्साधारणनिमित्त तद्रूपत्व, स्थितिरूपेण परिणताना जीवपुद्गलाना यत् साधारणनिमित्त तद्रूपत्व वाऽधर्मास्तिकायस्य लक्षणम् । ३ अवगाहमानाना पदार्थानामवकाशदातृत्व शर्करावह्न्योर्दुग्धायोगोलकवत्, हेतुनाधारकत्वमाकाशस्य लक्षणम् । ४ ग्रहणधारणादिपरिणामत्वे सति रूपादिमत्त्वम्, रूपादिसस्थानपरिणामरूपत्व वा पुद्गलास्तिकायस्य लक्षणम् । ५ वर्तन्ते भवन्ति भावास्तेन रूपेण तान् प्रति प्रयोजकत्व वर्तना सा लक्षणमस्येति वर्तनालक्षण काल द्रुमादिपुष्पोद्भेदादिनैयत्यहेतु । ६ उपयोगवत्त्व जीवस्य लक्षणम् । ज्ञानदर्शनयो सम्यक् स्वाविषयकसीमानुल्लङ्घनेन धारणरूपवत्त्वम्, बाह्याभ्यन्तरनिमित्तकत्वे सति आत्मनो यथायोग चैतन्यानुकारिपरिणामविशेषरूपत्व वोपयोगस्य लक्षणम् ।

काय इत्यजीवकाया । तान् लक्षणत परस्तोद्वक्ष्याम । कायग्रहण प्रदेशावयवबहुत्वार्थमद्धासमयप्रतिषेधार्थं च ॥ १ ॥

द्रव्याणि जीवाश्च ॥ २ ॥

एते धर्मादयश्चत्वारो प्राणिनश्च पञ्च द्रव्याणि च भवन्तीति। उक्त हि "मतिश्रुतयोर्निबन्धो द्रव्येष्वसर्वपर्यायेषु" "सर्वद्रव्यपर्यायेषु केवलस्य" इति ॥ २ ॥

नित्यावस्थितान्यरूपाणि ॥ ३ ॥

एतानि द्रव्याणि नित्यानि भवन्ति। 'तद्भावोऽव्यय नित्यम्' इति वक्ष्यते ॥ अवस्थितानि च । न हि कदाचित्पञ्चत्व भूतार्थत्व च व्यभिचरन्ति ॥ अरूपाणि च । नेषा रूपमस्तीति । रूप मूर्तिर्मूर्त्याश्रयाश्च स्पर्शादय इति ॥ ३ ॥

---

पुद्गल विना सर्वद्रव्याण्यरूपीणि नित्यावस्थितानि च तत्र नित्यत्व नाम परिणामान्तरापत्तौ सत्यामप्यन्वयिनोऽशादप्रच्युतरूपत्व कदाचिदपि पञ्चभूतार्थं न व्यभिचरन्ती त्येवरूपत्वमवस्थितस्य लक्षणम् । जीवपुद्गलौ विना निष्क्रियाण्यपि तानि सन्ति । तत्र क्रियावत्त्व नाम कम्पचलनेर धनचेष्टाविशेषरूपत्वम्, निमित्तद्वयापेक्षत्वे सति द्रव्यस्य दशान्तरप्राप्तिहेतुभूतपर्यायविशेषरूपत्व वा । तदभाववत्त्व निष्क्रियत्वम् ।

१ अ ५ सू १७–१८–१९–२०–२१–२२

२ पट्साटिकादृष्टान्तसिद्ध सर्वसूक्ष्म पूर्वापरकोटिविप्रमुक्तो वर्तमान एककालादा ।

३ अ १ सू २७

४ अ १ सू ३०

रूपिण पुद्गला ॥ ४ ॥

पुद्गला एव रूपिणो भवन्ति । रूपमेषामस्त्येषु वास्तीति रूपिण¹ ॥ ४ ॥

आ(आ-आ)काशादेकद्रव्याणि ॥ ५ ॥

आ आकाशाद्धर्मादीन्येकद्रव्याण्येव भवन्ति । पुद्गलजीवास्त्वनेकद्रव्याणीति ॥ ५ ॥

निष्क्रियाणि च ॥ ६ ॥

आ आकाशादेव धर्मादीनि निष्क्रियाणि भवन्ति । पुद्गल जीवास्तु क्रियावन्तः । क्रियेति गतिकर्माह ॥ ६ ॥

अत्राह । उक्तं भवता प्रदेशावयवबहुत्वं कायसंज्ञमिति । तस्मात्क एषा धर्मादीनां प्रदेशावयवनियम इति । अत्रोच्यते । सर्वेषा प्रदेशा¹ सन्त्यन्यत्र परमाणो¹ । अवयवास्तु स्कन्धानामेव । वक्ष्यते हि "अणवः स्कन्धाश्च" "सघातभेदेभ्यं उत्पद्यन्ते" इति ॥

---

१ पूरणाद् गलनाच्च पुद्गला परमाणुप्रभृतयोऽनन्तानन्तप्रदेशास्कन्धपर्यवसाना स्त एव रूपवत्तामनन्यसाधारणामिनेन्द्रूपपरिणतिसामर्थ्यापादितसूक्ष्मस्थूलविशेषाविशेष प्रकर्षाप्रकर्षवर्तिनीं बिभ्रति । न धर्मादिद्रव्यविशेषा इति रूपवत्त्वमनावधार्यते । तद्धि न जातुचिदतिपरिचितपरमाणुद्व्यणुकादिनमन्तद्रव्यकलापमुज्झति । सामर्थ्याच्च पुद्गला अपि न ता विहाय वर्तन्ते । अत पुद्गला एव रूपिण ।

२ एकशब्दोऽसहायार्थमभिधत्ते । यथा परमाणु परमाण्वन्तरेण सद्वितीय । आत्मा आत्मान्तरेण ज्ञानसुखदु खजीवनादिभेदभाजा । न धर्मद्रव्य धर्मद्रव्यान्तरेण स सहायम् । एवमेवाधर्मव्योमनी ।

३ इतिकरण यस्मादर्थ । यस्मात्तुल्यजातीयभूयस्त्वमेषा तस्मादनेकद्रव्याणि परमाणुप्रभृतीन्यनन्ताणुकस्कन्धावसानानि क्षितिजलज्वलनानिलतरुद्वित्रिचतुष्पञ्चेन्द्रिया स्मानश्चेति भावनीयम् ।

४ अ ५ सू १ भाष्य ।

५ अ ५ सू २५

६ अ ५ सू २६

असङ्ख्येयाः प्रदेशा धर्माधर्मयो ॥ ७ ॥

प्रदेशो नामापेक्षिक. सर्वसूक्ष्मस्तु परमाणोरवगाह इति॥७॥

जीवस्य च ॥ ८ ॥

एकजीवस्य चासङ्ख्येया प्रदेशा भवन्तीति ॥ ८ ॥

आकाशस्यानन्ता. ॥ ९ ॥

लोकालोकाकाशस्यानन्ता प्रदेशा' । लोकाकाशस्य तु धर्माधर्मैकजीवैस्तुल्या. ॥ ९ ॥

सङ्ख्येयासङ्ख्येयाश्च पुद्गलानाम् ॥ १० ॥

सङ्ख्येया असङ्ख्येया अनन्ताश्च पुद्गलाना प्रदेशा भवन्ति । अनन्ता इति वर्तते ॥ १० ॥

नाणोः ॥ ११ ॥

अणो प्रदेशा न भवन्ति । अनादिरमध्योऽप्रदेशो हि परमाणु ॥ ११ ॥

लोकाकाशेऽवगाहः ॥ १२ ॥

अवगाहिनामवगाहो लोकाकाशे भवति ॥ १२ ॥

धर्माधर्मयो कृत्स्ने ॥ १३ ॥

धर्माधर्मयो कृत्स्ने लोकाकाशेऽवगाहो भवतीति ॥ १३ ॥

एकप्रदेशादिषु भाज्य. पुद्गलानाम् ॥ १४ ॥

अप्रदेशसङ्ख्येयासङ्ख्येयानन्तप्रदेशाना पुद्गलानामेकादिष्वा

---

१ अवगाह –प्रवेश ।

काशप्रदेशेषु भाज्योऽवगाहः[1] । भाज्यो विभाज्यो विकल्प इत्यनर्थान्तरम् । तद्यथा—परमाणोरेकस्मिन्नेव प्रदेशे । द्व्यणुकस्यैकस्मिन् द्वयोश्च । त्र्यणुकस्यैकस्मिन् द्वयोस्त्रिषु च । एवं चतुरणुकादीनां सङ्ख्येयासङ्ख्येयप्रदेशस्यैकादिषु सङ्ख्येयेष्वसङ्ख्येयेषु च । अनन्तप्रदेशस्य च ॥ १४ ॥

असङ्ख्येयभागादिषु जीवानाम् ॥ १५ ॥

लोकाकाशप्रदेशानामसङ्ख्येयभागादिषु जीवानामवगाहो भवति । आसर्वलोकादिति ॥ १५ ॥

अत्राह । को हेतुरसङ्ख्येयभागादिषु जीवानामवगाहो भवतीति। अत्रोच्यते—

प्रदेशसंहारविसर्गाभ्यां प्रदीपवत् ॥ १६ ॥

जीवस्य हि प्रदेशानां संहारविसर्गाविष्टौ प्रदीपस्येव । तद्यथा—तैलवर्त्यग्न्युपादानप्रवृद्धः प्रदीपो महतीमपि कूटागारशालां प्रकाशयत्यण्वीमपि, माणिकावृत माणिकां द्रोणावृतो द्रोणमाढकावृतश्चाढकं प्रस्थावृतः प्रस्थं पाण्यावृतो पाणिमिति । एवमेव प्रदेशानां संहारविसर्गाभ्यां जीवो महान्तमणु वा पञ्चविधं शरीरस्कन्धं धर्माधर्माकाशपुद्गलजीवप्रदेशसमुदायं व्याप्नोतीत्यवगाहत इत्यर्थः[2] । धर्माधर्माकाशजीवानां परस्परेण पुद्गलेषु च वृत्तिर्न विरुध्यतेऽमूर्तत्वात् ॥

अत्राह । सति प्रदेशसंहारविसर्गसंभवे कस्मादसङ्ख्येयभागादिषु जीवानामवगाहो भवति नैकप्रदेशादिष्विति । अत्रोच्यते । सयोगत्वात्संसारिणां[3] चरमशरीरत्रिभागहीनावगाहित्वाच्च सिद्धानामिति ॥ १६ ॥

---

१ अपरित्यक्तस्वात्मावयवोऽप्यनेकमाकारमादत्ते प्रदीपः ।

२ सिद्धमिदम् । जीवो महान्तमणु वा संहारविसर्गाभ्यां विग्रहं गृह्णाति ।

३ सह योगेन वर्तत इति सयोगः । कार्मणशरीरीति यावत् ।

अत्राह । उक्त भवता धर्मादीनास्तिकायान् परस्ताल्लक्षणतो वक्ष्याम इति तत्किमेषा लक्षणमिति । अत्रोच्यते—

गतिस्थित्युपग्रहो धर्माधर्मयोरुपकार ॥ १७ ॥

गतिमता गते स्थितिमता च स्थितेरुपग्रहो धर्माधर्मयोरुपकारो यथासङ्ख्यम् । उपग्रहो निमित्तमपेक्षा कारण हेतुरित्यनर्थान्तरम् । उपकार प्रयोजन गुणोऽर्थ इत्यनर्थान्तरम् ॥ १७ ॥

आकाशस्यावगाहः ॥ १८ ॥

अवगाहिना धर्माधर्मपुद्गलजीवानामवगाह आकाशस्योपकार । धर्माधर्मयोरन्त प्रवेशसम्भवेन पुद्गलजीवाना सयोगविभागैश्चेति ॥१८॥

शरीरवाङ्मन प्राणापाना पुद्गलानाम् ॥ १९ ॥

पञ्चविधानि शरीराण्यौदारिकादीनि वाङ्मन प्राणापानाविति पुद्गलानामुपकार । तत्र शरीराणि यथोक्तानि । प्राणापानौ च नामकर्मणि व्याख्यातौ । द्वीन्द्रियादयो जिह्वेन्द्रिययोगाद्भाषात्वेन गृह्णन्ति नान्ये । सज्ञिनश्च मनस्त्वेन गृह्णन्ति नान्य इति । वक्ष्यते हि 'सकषायत्वाज्जीव कर्मणो योग्यान् पुद्गलानादत्त' इति ॥१९॥

किं चान्यत्—

---

१ अ ५ सू १ भाष्य।
२ इतिशब्दश्चार्थे।
३ अ २ सू ३७
४ अ ८ सू १२ भाष्ये।
५ अ ८ सू २

सुखदु.खजीवितमरणोपग्रहाश्च ॥ २० ॥

सुखोपग्रहो दुःखोपग्रहो जीवितोपग्रहो मरणोपग्रहश्चेति पुद्गलानामुपकार । तद्यथा–इष्टाः स्पर्शरसगन्धवर्णशब्दाः सुखस्योपकारः । अनिष्टा दुःखस्य । स्नानाच्छादनानुलेपनभोजनादीनि विधिप्रयुक्तानि जीवितस्यानपवर्तन चायुष्कस्य । विपशस्त्राग्न्यादीनि मरणस्यापवर्तन चायुष्कस्य ॥

अत्राह । उपपन्न तावदेतत्सोपक्रमाणामपवर्तनीयायुषाम् । अथानपवर्त्यायुषां कथमिति । अत्रोच्यते । तेषामपि जीवितमरणोपग्रह पुद्गलानामुपकार । कथमिति चेत्तदुच्यते । कर्मणः स्थितिक्षयाभ्याम् । कर्म हि पौद्गलमिति । आहारश्च त्रिविधः सर्वेषामेवोपकुरुते । किं कारणम् । शरीरस्थित्युपचयबलवृद्धिप्रीत्यर्थ ह्याहार इति ॥ २० ॥

अत्राह । गृह्णीमस्तावद्धर्माधर्माकाशपुद्गला जीवद्रव्याणामुपकुर्वन्तीति । अथ जीवाना क उपकार इति । अत्रोच्यते—

परस्परोपग्रहो जवािनाम् ॥ २१ ॥

परस्परस्य हिताहितोपदेशाभ्यामुपग्रहो जीवानामिति ॥२१॥

---

१ बाह्यद्रव्यसम्बन्धापेक्षसद्वेद्योदयात्ससार्यात्मन प्रसादपरिणाम सुखम् । इष्टदारापत्यस्रगनुलेपनान्नपानादिद्रव्योपनानितामिति विस्तर । तदेव च सुखमुपग्रहोऽनुग्रह पुद्गलाना निमित्ततया परिणतावात्मन । एव दुःखादिष्वपि योजनीयम् । असद्वेद्योदयादात्मपरिणामो बाह्यद्रव्यापेक्ष सक्लेशप्रायो दुःखम् । भवस्थितिनिमित्तायुर्द्रव्यसम्बन्धभाज पुरुषस्य प्राणापानलक्षणक्रियाविशेषाद् व्युपरमो जीवितम् । तदन्योपरतिर्मरणम् । कथ मरणमात्मोपग्रह इति चेत्, निर्विण्णस्य पुरुषस्य तत्प्रियत्वात् विषादिद्रव्यसम्बन्धे सत्यायुषो यौगपद्येनोपभोगोदयात् ।

२ हितम्–उत्तरकाले वर्तमाने यत् क्षम युक्त न्याय्य वा । तद्विपरीतमहितम् । हितप्रतिपादनेन अहितप्रतिषेधेन चोपग्रह कुर्वन्ति ।

अत्राह । अथ कालस्योपकार क इति । अत्रोच्यते—

**वर्तना परिणामः क्रिया परत्वापरत्वे च कालस्य ॥२२॥**

तद्यथा—सर्वभावाना वर्तना कालाश्रया वृत्तिः । वर्तना उत्पत्ति स्थिति प्रथमसमयाश्रया इत्यर्थः ॥ परिणामो द्विविध । अनादिरादिमांश्च । त परस्ताद्वक्ष्याम । क्रिया गति । सा त्रिविधा । प्रयोगगतिर्विस्रसागतिर्मिश्रिकेति ॥ परत्वापरत्वे त्रिविधे प्रशसाकृते क्षेत्रकृते कालकृते इति । तत्र प्रशसाकृते परो धर्म पर ज्ञान अपरो धर्म अपरमज्ञानमिति । क्षेत्रकृते एकदिकालावस्थितयोर्विप्रकृष्ट परो भवति सन्निकृष्टोऽपर. । कालकृते द्विरष्टवर्षाद्वर्षशतिक. परो भवति वर्षशतिकाद्विरष्टवर्षोऽपरो भवति । तदेव प्रशसाक्षेत्रकृते परत्वापरत्वे वर्जयित्वा वर्तनादीनि कालकृतानि कालस्योपकार इति ॥ २२ ॥

अत्राह उक्त भवता शरीरादीनि पुद्गलानामुपकार इति । पुद्गलानिति च तन्त्रान्तरीया जीवान्परिभाषन्ते । स्पर्शादिरहिताश्चान्ये तत्कथमेतादिति । अत्रोच्यते । एतदादिविप्रतिपत्तिप्रतिषेधार्थ विशेषवचनविवक्षया चेदमुच्यते ॥

---

१ अ ५ सू ४७

२ जीवपरिणामसप्रयुक्ता शरीराहारवर्णगन्धरसस्पर्शसस्थानविषया प्रयोगगति ।

३ प्रयोगमन्तरेण केवलाजीवद्रव्यस्वपरिणामरूपा परमाण्वभ्रद्रव्यनुपरिवेषादि रूपा विचित्रसस्थाना विस्रसागति ।

४ प्रयोगविस्रसाभ्यामुभयपरिणामरूपत्वात् जीवप्रयोगसहचरिता चेतनद्रव्यपरिणामात् कुम्भस्तम्भादिविषया मिश्रिका गति ।

५ अ ५ सू १९

६ अत्र प्रस्तावे परोऽभिधत्ते—प्रतिपादित भवता शरीरादय सुखादयश्च पुद्गलानामुपकार इति । तन्त्रान्तरीयाश्च प्रयागुनवीया पुद्गल इत्यनेन शब्देन जीवान् परिभाषन्ते पुद्गलशब्द जीवेषु सङ्केतयन्ति व्यवहारसिद्ध्यर्थमिति । ननु च तैरा जीव

## स्पर्शरसगन्धवर्णवन्तः पुद्गलाः ॥ २३ ॥

स्पर्शः रसः गन्धः वर्णः इत्येवंलक्षणाः पुद्गला भवन्ति । तत्र स्पर्शोऽष्टविधः कठिनो मृदुर्गुरुर्लघुः शीत उष्णः स्निग्धः रूक्ष इति । रसः पञ्चविधस्तिक्तः कटुः कषायोऽम्लो मधुर इति । गन्धो द्विविधः सुरभिरसुरभिश्च । वर्णः पञ्चविधः कृष्णो नीलो लोहितः पीतः शुक्ल इति ॥ २३ ॥

किं चान्यत्—

## शब्दबन्धसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपोद्योतवन्तश्च ॥ २४ ॥

तत्र शब्दः षड्विधः । ततो विततो घनः शुषिरो घर्षो भाष

---

एव नास्ति, कथं तद्विषयं पुद्गलध्वनिं परिभाषेरन्निति ? उच्यते अस्त्यार्यसम्मतीयानामात्मा, सौत्रान्तिकानां तु चित्ततन्तुसन्ततौ तत्पुद्गलप्रज्ञप्तिः, चित्तसन्ततौ वेदनासंज्ञाचेतनादिधर्मयुक्तायां चक्षुरादिसहितायां च चित्तेनान्योन्यानुविधानात्, इत्यतश्चित्ततन्तूनां धर्माणां सन्ततिरहङ्कारवस्तुत्वादात्मेत्युपचर्यते । तथा पुनः पुनर्गत्यादानात् पुद्गल इत्युपचर्यते, योगाचाराणां तु विज्ञानपरिणामः पुद्गलः । यथाह—'आत्मधर्मोपचारो हि विविधो यः प्रवर्तते । विज्ञानपरिणामोऽसौ परिणामः स च त्रिधा' ॥ एवं तन्त्रान्तरीयैः पुद्गलो जीव उक्तः, त्वया पुनः शरीराद्युपकारिणः पुद्गला इत्युच्यते तदेतत्कथं विप्रतिपिद्धत्वात् इति प्रश्नयात ॥ ननु पूर्वं संशय, पूर्वमुक्तमेव—'रूपिणः पुद्गलाः (अ ५ सू ४) इति न च रूप्यात्मा प्रतीत इति, उच्यते—रूपशब्देन तत्र मूर्तिरुक्ता, सा च मूर्तिरन्यैरसर्वगतद्रव्यपरिमाणमिष्यते, यथा मनः तच्च स्पर्शादिरहितं, एतन्निरासार्थं इदमवश्यं वक्तव्यम् भवति सूत्र—स्पर्शादियुक्ता मूर्तिः, तथा चतुस्त्र्येकगुणानि पृथिव्यादीनि कणभुजोक्तानि तत्प्रतिषेधार्थं चावश्यतया विधेयं सर्वाण्येतानि चतुर्गुणानीति ।

१ ततो मृदङ्गपटहादिसमुद्भवः ।

२ विततो वीणात्रिसरिकादितन्त्रीप्रभवः ।

३ घनः कांस्यतालकाष्ठशलाकादिजनितः ।

४ शुषिरो वेणुकम्बुरन्ध्रादिनिर्गतोद्भवः ।

५ घर्षः क्रकचकाष्ठादिसंघर्षप्रसूतः ।

६ भाषा—व्यक्तवागभिवर्णपदवाक्याकारेण भाष्यत इति ।

इति ॥ बन्धस्त्रिविधः । प्रयोगबन्धो विस्रसाबन्धो मिश्र इति । स्निग्धरूक्षत्वाद्भवतीति वक्ष्यते ॥ सौक्ष्म्यं द्विविधमन्त्यमापेक्षिकं च । अन्त्यं परमाणुष्वेव । आपेक्षिकं द्व्यणुकादिषु संघातपरिणामापेक्षं भवति । तद्यथा—आमलकाद्बदरमिति ॥ स्थौल्यमपि द्विविधमन्त्यमापेक्षिकं च संघातपरिणामापेक्षमेव भवति । तत्रान्त्यं सर्वलोकव्यापिनि महास्कन्धे भवति । आपेक्षिकं बदरादिभ्य आमलकादिष्विति ॥ संस्थानमनेकविधम् । दीर्घह्रस्वाद्यनित्थंत्वपर्यन्तम् । भेदः पञ्चविधः । औत्कारिकः चौर्णिकः खण्डः प्रतरः अनुतट इति ॥ तमश्छायातपोद्योताश्च परिणामजाः ॥ सर्व एवैते स्पर्शादयः पुद्गलेष्वेव भवन्तीति । अतः पुद्गलास्तद्वन्तः ॥

---

१ प्रयोगो जीवव्यापारः । तेन घटितो बन्धः प्रायोगिकः औदारिकादिशरीरजतुकाष्ठादिविषयः ।

२ विस्रसा स्वभावः प्रयोगनिरपेक्षो विस्रसाबन्धः । स द्विधा आदिमदनादिमद्भेदात् । तत्र आदिमान् विद्युदादिर्स्निग्धरूक्षगुणविशेषपरिणतपरमाणुप्रभवः स्कन्धपरिणामः । अनादिरपि धर्माधर्माकाशविषयः ।

३ प्रयोगविस्रसाभ्यां जीवप्रयोगसहचरिताचेतनद्रव्यपरिणतिलक्षणः स्तम्भकुम्भादि ।

४ अ ५ सु १२

५ वृत्तादिना निरूपयितुं यत्र शक्यं तदनित्थम् । तद्भावोऽनित्थंत्वम् । तत्पर्यन्तमनेकधा संस्थानम् ।

६ समुत्कीर्यमाणदारुप्रस्थकभेरीपुटदार्वादिविषयः औत्कारिकः ।

७ अवयवशश्चूर्णनं चौर्णिकः । भिन्नपिष्टपुष्टिवत् ।

८ खण्डशो विदारणं खण्डभेदः । शिलामृत्पिण्डवत् ।

९ अभ्रपटलभूर्जपत्रादिषु बहुविधपुटोच्छेदलक्षणः प्रतरभेदः ।

१० वंशपुष्टित्वगुत्पाटनम्— अनुतटः ।

अत्राह । किमर्थं स्पर्शादीनां शब्दादीनां च पृथक् सूत्रकरणमिति । अत्रोच्यते । स्पर्शादयः परमाणुषु स्कन्धेषु च परिणामजा एव भवन्तीति । शब्दादयस्तु स्कन्धेष्वेव भवन्त्यनेकनिमित्ताश्चेत्यतः पृथक्करणम् ॥ २४ ॥

त एते पुद्गलाः समासतो द्विविधा भवन्ति । तद्यथा—

अणवः स्कन्धाश्च ॥ २५ ॥

उक्तं च—

"कारणमेव तदन्त्यं सूक्ष्मो नित्यश्च भवति परमाणुः।
एकरसगन्धवर्णो द्विस्पर्शः कार्यलिङ्गश्च" ॥ इति ।

तत्राणवोऽबद्धाः स्कन्धास्तु बद्धा एव ॥ २५ ॥

अत्राह । कथं पुनरेतद्द्वैविध्यं भवतीति । अत्रोच्यते । स्कन्धास्तावत्—

संघातभेदेभ्य उत्पद्यन्ते ॥ २६ ॥

संघाताद्भेदात्संघातभेदादिति । एभ्यस्त्रिभ्यः कारणेभ्यः स्कन्धा उत्पद्यन्ते द्विप्रदेशादयः । तद्यथा—द्वयोः परमाण्वोः संघाताद्द्विप्रदेशः । द्विप्रदेशस्याणोश्च संघातात्त्रिप्रदेशः । एवं संख्येयानामसंख्येयानामनन्तानामनन्तानन्तानां च प्रदेशानां संघातात्तावत्प्रदेशाः ॥ एषामेव भेदात् द्विप्रदेशपर्यन्ताः ॥ एत एव संघातभेदाभ्यामेकसामयिकाभ्यां द्विप्रदेशादयः स्कन्धा उत्पद्यन्ते। अन्यस्य

---

१ अन्त्यः इत्यणवः । अस्मदादीन्द्रियव्यापारातीतत्वात् । केवलसद्भावेनसम धिगम्याः सौक्ष्म्यात् ।

२ स्थौल्याद् ग्रहणदानादिव्यापारसमर्था प्रायः स्कन्धाः संघाताः ।

३ द्रव्यास्तिकनयापेक्षयाऽज्झितमूर्तेः । पर्यायापेक्षया तु नीलादिभिराकारैरनित्य एव ।

४ समये भवः सामयिकः । एकशब्दः समानार्थाभिधायी । समानः समयो ययोः संघातभेदयोस्ताभ्यामेककालाभ्यामिति यावत् ।

सघातेनान्यतो भेदेनेति ॥ २६ ॥

अत्राह । अथ परमाणुः कथमुत्पद्यत इति अत्रोच्यते—

भेदादणु ॥ २७ ॥

भेदादेव परमाणुरुत्पद्यते न सघातादिति ॥ २७ ॥

भेदसघाताभ्यां चाक्षुषा ॥ २८ ॥

भेदसघाताभ्यां चाक्षुषा स्कन्धा उत्पद्यन्ते । अचाक्षुषास्तु यथोक्तात्सघाताद्भेदात्सघातभेदाच्चेति ॥

अत्राह । धर्मादीनि सन्तीति कथ गृह्यत इति । अत्रोच्यते । लक्षणत ॥ २८ ॥

किं च सतो लक्षणमिति । अत्रोच्यते—

उत्पादव्ययध्रौव्ययुक्त सत् ॥ २९ ॥

उत्पादव्ययौ ध्रौव्य च युक्त सतो लक्षणम् । यदुत्पद्यते यद्व्येति यच्च ध्रुव तत्सत् । अतोऽन्यदसदिति ॥ २९ ॥

[ उत्पादव्ययौ ध्रौव्य च सतो लक्षणम् । यदिह मनुष्यत्वादिना पर्यायेण व्ययत आत्मनो देवत्वादिना पर्यायेणोत्पाद. एकान्तध्रौव्ये आत्मनि तत्तथैकस्वभावतयावस्थाभेदानुपपत्ते । एव च ससारापवर्गभेदाभाव । कल्पितत्वेऽस्य निःस्वभावतयानुपलब्धिप्रस-

---

१ एतदादिसूत्रसमाप्तिपर्यन्त भाष्य हारिभद्रवृत्तौ व्याख्यात न सिद्धसेनगणीयायाम् ।

२ आदिशब्दात्तिर्यगादिपरिग्रह ।

३ जीवस्य ।

४ आदिशब्दान्नारकादिपरिग्रह ।

५ सर्वथाप्रच्युतानुत्पन्नस्थिरैकरूपे ।

६ देवादिभेदानुपपत्तेरित्यर्थ ।

ज्ञात। सत्स्वभावत्वे त्वेकान्तध्रौव्याभावस्तस्यैव तथाभवनादिति तत्त-त्स्वभावतया विरोधाभावात्तथोपलब्धिसिद्धेः। तद्भ्रान्तत्वे प्रमाणा-भाव। योगिज्ञानप्रमाणाभ्युपगमे तत्त्वभ्रान्तस्तदवस्थाभेद। इत्थं चैतत् अन्यथा न मनुष्यादेर्देवत्वादीति। एव यमादिपालनानर्थक्यम्। एव च सति "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमा" "शौच-संतोषतप स्वाध्यायेश्वरप्रणिधानानि नियमा" इति आगम-वचन वचनमात्रम्। एवमेकान्तध्रौव्येऽपि सर्वथा तदभावापत्तेः तत्त्वतोऽहेतुकत्वमेवावस्थान्तरमिति सर्वदा तद्भावाभावप्रसङ्गः अहेतु-कत्वाविशेषात्। न हेतुस्वभावतयोध्व तद्भाव तत्स्वभावतयैकान्तेन ध्रौव्यसिद्धे। यदा हि हेतोरेवासौ स्वभावो यत्तदनन्तर तद्भावस्तदा ध्रुवोऽन्वयस्तस्यैव तथा भवनात्। एव च तुलोन्नामावनामवद्धेतुफल-योर्युगपद्व्ययोत्पादसिद्धिरन्यथा तत्तद्व्यतिरिक्तेतरविकल्पाभ्याम योगात्। तन्न। मनुष्यादेर्देवत्वमित्यायात मार्गवैफल्यमागमस्येति। एव सम्यग्दृष्टि सम्यक्सकल्पः सम्यग्वाग् सम्यग्मार्ग, सम्यगा-जीव, सम्यग्व्यायाम सम्यक्स्मृति सम्यक्समाधिरिति वाग्वैयर्थ्यम्। एव घटव्ययवत्या मृद कपालोत्पादभावात् उत्पादव्ययध्रौव्ययुक्तं सदिति। एकान्तध्रौव्ये तत्तथैकस्वभावतयावस्थाभेदानुपपत्ते। समान पूर्वेण। एवमेतद्व्यवहारत, तथा मनुष्यादिस्थितिद्रव्यमधि-कृत्य दर्शितम्। निश्चयतस्तु प्रतिसमयमुत्पादादिमत्तथाभेदासिद्धे। अन्यथा तदयोगात्। यथाह—

---

१ पात योगसूत्रम् २–३५

२ पात सू २ ३२

३ अथद्वन्द्वमित्यथ ।

"सर्वव्यक्तिषु नियतं क्षणे क्षणेऽन्यत्वमथ च न विशेषः ।
सत्योश्चित्यपचित्योराकृतिजातिव्यवस्थानात् ॥ १ ॥
नरकादिगतिविभेदो भेदः संसारमोक्षयोश्चैव ।
हिंसादिस्तद्धेतुः सम्यक्त्वादिश्च मुक्त्य इति ॥ २ ॥
उत्पादादियुते खलु वस्तुन्येतदुपपद्यते सर्वम् ।
तद्रहिते तदभावात् सर्वमपि न युज्यते नीत्या ॥ ३ ॥
निरुपादानो न भवत्युत्पादो नापि तादवस्थ्येऽस्य ।
तद्विक्रियापि तथा त्रितययुतेऽस्मिन् भवत्येष ॥ ४ ॥
सिद्धत्वेनोत्पादो व्ययोऽस्य संसारभावतो ज्ञेयः ।
जीवत्वेन ध्रौव्यं त्रितययुतं सर्वमेव तु ॥ ५ ॥"

तदित्थं उत्पादव्ययौ ध्रौव्यं चैतत्त्रितययुक्तं सतो लक्षणम् । अथवा युक्तं समाहितं त्रिस्वभावं सत् । यदुत्पद्यते यद्व्येति यच्च ध्रुवं तत्सत् अतोऽन्यदसदिति ॥

अत्राह । गृह्णीमस्तावदेवंलक्षणं सदिति । इदं तु वाच्यं तत्किं नित्यमाहोस्विदनित्यमिति । अत्रोच्यते—

तद्भावाव्ययं नित्यम् ॥ ३० ॥

यत्सतो भावान्न व्येति न व्येष्यति तन्नित्यमिति ॥ ३० ॥

अर्पितानर्पितसिद्धेः ॥ ३१ ॥

सच्च त्रिविधमपि नित्यं च । उभे अपि अर्पितानर्पितसिद्धेः[2] । अर्पितव्यावहारिकमनर्पितव्यावहारिकं चेत्यर्थः । तच्च सच्चतुर्विधम् ।

---

१ कारणशून्य ।

२ अर्पितम्-उपनीतं वस्तु विवक्षितेन धर्मेण तच्छब्दवाचकेन शब्देनाभिहितं व्यवहारः प्रयोजनमस्येति व्यावहारिकं अर्पितं च तद् व्यावहारिकं चेत्यर्पितव्यावहारिकम् । एतदुक्तं भवति । किंचिद्वस्तु विशिष्टाभिधानार्पितं सद् व्यवहारं साधयति अपरमनर्पितमेव स शब्दवाचकेन शब्देन प्रत्यायमानं सद् व्यवहाराय व्याप्रियत इत्यत आह अनर्पितव्यावहारिकं चेत्यर्थः ।

तद्यथा—द्रव्यास्तिक मातृकापदास्तिकमुत्पन्नास्तिक पर्यायास्तिकमिति । एषामर्थपदानि द्रव्य वा द्रव्ये वा द्रव्याणि वा सत् । असन्नाम नास्त्येव द्रव्यास्तिकस्य ॥ मातृकापदास्तिकस्यापि । मातृकापद वा मातृकापदे वा मातृकापदानि वा सत् । अमातृकापद वा अमातृकापदे वा अमातृकापदानि वा असत् ॥ उत्पन्नास्तिकस्य । उत्पन्न वोत्पन्ने वोत्पन्नानि वा सत् । अनुत्पन्न वानुत्पन्ने वानुत्पन्नानि वा सत् ॥ अर्पितेऽनुपनीते न वाच्य सदित्यसदिति वा । पर्यायास्तिकस्य सद्भावपर्याये वा सद्भावपर्याययोर्वा सद्भावपर्यायेषु वा आदिष्ट द्रव्य वा द्रव्ये वा द्रव्याणि वा सत् । असद्भावपर्याये वा असद्भावपर्याययोर्वा असद्भावपर्यायेषु वा आदिष्ट द्रव्य वा द्रव्ये वा द्रव्याणि वासत् । तदुभयपर्याये वा तदुभयपर्याययोर्वा तदुभयपर्यायेषु वा आदिष्ट द्रव्यं वा द्रव्ये वा द्रव्याणि वा न वाच्य सदित्यसदिति वा । देशादेशेन विकल्पयितव्यमिति ॥

अत्राह । उक्त भवता सघातभेदेभ्य स्कन्धा उत्पद्यन्त इति । तत्कि सयोगमात्रादेव सघातो भवति । आहोस्विदस्ति कश्चिद्विशेष इति । अत्रोच्यते । सति सयोगे बद्धस्यै सघातो भवतीति ॥३१॥

अत्राह । अथ कथ बन्धो भवतीति । अत्रोच्यते—

---

१ द्रव्यास्तिक मातृकापदास्तिक च द्रव्यनय । उत्पन्नास्तिक पर्यायास्तिक च पर्यायनय । अस्ति म तेरस्येत्यास्तिकम् । द्रव्ये अस्तिकम् । द्रव्यास्तिकम् । एव मातृकापदास्तिकादिष्वपि योज्यम् । तत्र सग्रहाभिप्रायानुसारि द्रव्यास्तिकम् । व्यवहार नयानुसारि मातृकापदास्तिकम् ।

२ सकलस्य वस्तुनो बुद्धिच्छेदविभक्तोऽवयवो देशस्तस्मिन् देशे आदेशो देशा देशस्तेन देशादेशेन विकल्पनीय व्याख्येयम् ।

३ अ ५ सू २६

४ एकत्वपरिणतिभाज ।

स्निग्धरूक्षत्वाद्बन्धः ॥ ३२ ॥

स्निग्धरूक्षयो[1] पुद्गलयो[2] स्पृष्टयोः स्पृष्टयोर्बन्धो भवतीति॥३२॥

अत्राह । किमेष एकान्त इति । अत्रोच्यते—

न जघन्यगुणानाम् ॥ ३३ ॥

जघन्यगुणस्निग्धाना जघन्यगुणरूक्षाणा च परस्परेण बन्धो न भवतीति ॥ ३३ ॥

अत्राह । उक्त भवता जघन्यगुणवर्जाना स्निग्धाना रूक्षेण रूक्षाणा च स्निग्धेन सह बन्धो भवतीति । अथ तुल्यगुणयोः किमत्यन्तप्रतिषेध इति । अत्रोच्यते । न जघन्यगुणानामित्यधिकृत्येदमुच्यते—

गुणसाम्ये सदृशानाम् ॥ ३४ ॥

गुणसाम्ये सति सदृशाना बन्धो न भवति । तद्यथा —तुल्यगुणस्निग्धस्य तुल्यगुणस्निग्धेन तुल्यगुणरूक्षस्य तुल्यगुणरूक्षेणेति ।

अत्राह । सदृशग्रहण किमपेक्षत इति । अत्रोच्यते । गुणवैषम्ये सदृशाना बन्धो भवतीति ॥ ३४ ॥

अत्राह । किमविशेषेण गुणवैषम्ये सदृशाना बन्धो भवतीति । अत्रोच्यते—

द्व्यधिकादिगुणाना तु ॥ ३५ ॥

द्व्यधिकादिगुणाना तु सदृशाना बन्धो भवति । तद्यथा—

---

१ सयुक्तयो ।

२ नियम ।

३ अ ५ सू ३२

४ द्वाभ्या गुणविशेषाभ्यामन्यस्मादधिको य परमाणु स [illegible] द्व्यधिकादिगुणा । गुणशब्दोऽत्र गुणिवचन । गुणवन्तो गुणा परमाणव [illegible]

स्निग्धस्य द्विगुणाद्यधिकास्निग्धेन । द्विगुणाद्यधिकस्निग्धस्य स्निग्धेन । रूक्षस्यापि द्विगुणाद्यधिकरूक्षेण । द्विगुणाद्यधिकरूक्षस्य रूक्षेण । एकादिगुणाधिकयोस्तु सदृशयोर्बन्धो न भवति । अत्र तुशब्दो व्यावृत्तिविशेषणार्थः प्रतिषेध व्यावर्तयति बन्ध च विशेषयति ॥

अत्राह । परमाणुषु स्कन्धेषु च ये स्पर्शादयो गुणास्ते किं व्यवस्थितास्तेष्वाहोस्विदव्यवस्थिता इति । अत्रोच्यते । अव्यवस्थिताः । कुत. । परिणामात् ॥ ३५ ॥

अत्राह । द्वयोरपि बध्यमानयोर्गुणवत्त्वे सति कथ परिणामो भवतीति उच्यते—

बन्धे समाधिकौ पारिणामिकौ ॥ ३६ ॥

बन्धे सति समगुणस्य समगुण. परिणामको भवति । अधिकगुणो हीनस्येति ॥ ३६ ॥

अत्राह । उक्त भवता 'द्रव्याणि जीवाश्च' इति । तत्किमुद्देशत एव द्रव्याणा प्रसिद्धिराहोस्विल्लक्षणतोऽपीति । अत्रोच्यते । लक्षणतोऽपि प्रसिद्धि । तदुच्यते—

गुणपर्यायवद् द्रव्यम् ॥ ३७ ॥

गुणान् लक्षणतो वक्ष्याम । भावान्तर सज्ञान्तर च पर्याय.। तदुभय यत्र विद्यते तद्द्रव्यम् । गुणपर्याया अस्य सन्त्यस्मिन्वा सन्तीति गुणपर्यायवत् ॥ ३७ ॥

---

१ बध —सयोग ।

२ अ ५ सू २

३ अव्याप्त्यतिव्याप्त्यसम्भवदूषणत्रयरहितधर्मो लक्षणम् ।

४ अ ५ सू. ४०

५ भावादन्यो भावान्तरम् । समभिरूढनयाभिप्रायेणेन्दनशक्रनपूर्दारणादयोऽथविशेषा रूपादयश्च भावान्तरा भावभेदा सज्ञान्तराणा प्रवृत्तौ निमित्तभूता । सज्ञान्तर चेन्द्रशक्रपुरन्दररूपादि ।

कालश्चेत्येके ॥ ३८ ॥

एके त्वाचार्या व्याचक्षते कालोऽपि द्रव्यमिति ॥ ३८ ॥

सोऽनन्तसमय ॥ ३९ ॥

स चैष कालोऽनन्तसमय । तत्रैक एव वर्तमानसमय । अतीतानागतयोस्त्वानन्त्यम् ॥ ३९ ॥

अत्राह । उक्त भवता 'गुणपर्यायवद्द्रव्यम्' इति । तत्र के गुणा इति । अत्रोच्यते—

द्रव्याश्रया निर्गुणा गुणा ॥४०॥

द्रव्यमेषामाश्रय इति द्रव्याश्रया. । नैषा गुणा' सन्तीति निर्गुणाः ॥ ४० ॥

अत्राह । उक्त भवता 'बन्धे समाधिकौ पारिणामिकौ' इति तत्र क' परिणाम इति । अत्रोच्यते—

तद्भाव: परिणाम: ॥ ४१ ॥

धर्मादीना द्रव्याणा यथोक्ताना च गुणानां स्वभावः स्वतत्त्व परिणाम' ॥ ४१ ॥

---

१ दिगम्बरा 'कालश्च' इति तत्त्वार्थ (५–३९) सूत्रेण व्याचक्षन्ते ।

२ एकस्य नयस्य भेदलक्षणस्य प्रतिपत्तार तदुपयोगानन्यत्वादके अनर्पित-द्रव्यास्तिकनयदर्शना कालश्च द्रव्यान्तर भवतीत्याचक्षते ।

३ अत्र टिप्पणकग्रन्थे दिगम्बराणा खण्डनम् ।

४ अ ५ सू ३७

५ सन्ति गुणा किंतु द्रव्याद्व्यतिरिच्यमानस्वरूपा' । तयदा द्रव्य शुक्लाकारेण परिणत भवति तदा कृष्णाकारपरिणामो नास्तीति स्फुट निर्गुणत्वमिति ।

६ अ ५ सू ३६

स द्विविध॰ ।

अनादिरादिमाश्च ॥ ४२ ॥

तत्रानादिररूपिषु धर्माधर्माकाशजीवेष्विति ॥ ४२ ॥

रूपिष्वादिमान् ॥ ४३ ॥

रूपिषु तु द्रव्येषु आदिमान् । परिणामोऽनेकविध॰ स्पर्शपरिणामादिरिति ॥ ४३ ॥

योगोपयोगौ जीवेषु ॥ ४४ ॥

जीवेष्वरूपिष्वपि सत्सु योगोपयोगौ परिणामावादिमन्तौ भवतः । तत्रोपयोग॰ पूर्वोक्तः । योगस्तु परस्ताद्वक्ष्यते ॥ ४४ ॥

इति तत्त्वार्थाधिगमेऽर्हत्प्रवचनसङ्ग्रहे
पञ्चमोऽध्याय समाप्त ॥ ५ ॥

---

# अथ षष्ठोऽध्यायः ।



अत्राह । उक्ता जीवाजीवाः । अथास्रवः क इत्यास्रवप्रसिद्ध्यर्थमिदं प्रक्रम्यते—

## कायवाङ्मनःकर्म योगः ॥ १ ॥

कायिकं कर्म वाचिकं कर्म मानसं कर्म इत्येष त्रिविधो योगो भवति । स एकशो द्विविधः । शुभश्चाशुभश्च । तत्राशुभो हिंसास्तेयाब्रह्मादीनि कायिकः । सावद्यानृतपरुषपिशुनादीनि वाचिकः । अभिध्याव्यापादेर्ष्यासूयादीनि मानसः ॥ अतो विपरीतः शुभ इति॥१॥

## स आस्रवः ॥ २ ॥

स एष त्रिविधोऽपि योग आस्रवसंज्ञो भवति । शुभाशुभयोः कर्मणोरास्रवणादास्रवः । सरःसलिलावाहिनिर्वाहिस्रोतोवत् ॥२॥

---

१ एकशः—प्रत्येकम् ।

२ अब्रह्म-मैथुनम् ।

३ आदिशब्दात् दहनछेदनाल्पनहास्यधावनप्रभृतिकर्मविशेषः कायिको योगः ।

४ आदिशब्दादसत्यछल्यछदमादि ।

५ सत्त्वेष्वभिद्रोहानुध्यानं—अभिध्या ।

६ व्यापादः—स्वोपायोच्छादनारम्भः ।

७ ईर्ष्या-अक्षमा ।

८ असूया-क्रोधविशेषः ।

९ आदिग्रहणात् अभिमानदुःखशोकदैन्यादि ।

१० अहिंसास्तेयब्रह्मचर्यादिकाययोगः । असावद्यादिवचनमागमविहितभाषणं च वाचिकयोगः । अनभिध्यादिशुभध्यानध्यायितेति मनोयोगः ।

११ आस्रवति प्रविशति कर्म येन आत्मनीति आस्रवः कर्मबन्धहेतुरिति भावः ।

१२ यथा तटाके स्रोतसा सलिलावाहननिर्वाहाभ्यां न कदाचिच्छिन्नमानारिक्तता भवति एवमात्मनि कर्मदृष्टान्तयोजना । अतएव निरुद्धसलिलागमद्वारस्य तटागस्य रिक्तिः सुश्रद्धेया तथा संवृतकर्मणो जीवस्य ।

शुभः पुण्यस्य ॥ ३ ॥

शुभो योगः पुण्यस्यास्रवो भवति ॥ ३ ॥

अशुभः पापस्य ॥ ४ ॥

तत्र सद्वेद्यादि पुण्य वर्क्ष्यते शेष पापमिति ॥ ४ ॥

सकषायाकषाययोः साम्परायिकेर्य्यापथयो॰ ॥ ५ ॥

स एप त्रिविधोऽपि योग॰ सकषायाकषाययोः साम्परायिकेर्यापथयोरास्रवो भवति यथासङ्ख्य यथासम्भव च । सकषायस्य योग साम्परायिकस्य अकषायस्येर्यापथस्यैवैकसमयस्थितेः ॥ ५ ॥

अव्रतकषायेन्द्रियक्रियाः पञ्चचतुःपञ्चपञ्चविंशतिसख्या॰ पूर्वस्य भेदा ॥ ६ ॥

पूर्वस्येति सूत्रक्रमप्रामाण्यात्साम्परायिकस्याह । साम्परायिकस्यास्रवभेदा॰ पञ्च चत्वार॰ पञ्च पञ्चविंशतीरिति भवन्ति । पञ्च हिंसानृतस्तेयाब्रह्मपरिग्रहा । 'प्रमत्तयोगात्प्राणव्यपरोपण हिंसा' इत्येवमादयो वक्ष्यन्ते । चत्वार॰ क्रोधमानमायालोभा अनन्तानुबन्ध्यादयो वर्क्ष्यन्ते । पञ्च प्रमत्तस्येन्द्रियाणि । पञ्चविंशतिः

---

१ अ ८ सू २८

२ सकषायिकत्रिविधयोगकृतकर्मागमनरूपत्व साम्परायिकास्रवस्य लक्षणम् । अथवा ससारपरिभ्रान्तिकारणत्वे सति यथासभव त्रिविधयोगकृतकर्मागमनरूपत्वम् ।

३ अकषायकृतत्वैकसमयस्थितिकत्वयो सतोर्यथासभव त्रिविधयोगकृतकर्मागमन रूपत्व–ऐर्यापथिकास्रवस्य लक्षणम् ।

४ अ ६ सू ५

५ अ ७ सू ८

६ अ ८ सू १०

क्रिया. । तत्रेमे क्रियामत्यया यथासख्य प्रतेतव्या' । तद्यथा—सम्यक्त्वमिथ्यात्वप्रयोगसमादानेर्यापथा कायाधिकरणप्रदोषपरितापनप्राणातिपाता दर्शनस्पर्शनप्रत्ययसमन्तानुपातानाभोगा स्वहस्त

१ जिनसिद्धगुर्वादीना । पूजानमस्कारस्तवपात्रादिप्रदानरूपवैयावृत्याभिव्यक्तत्वे सति सम्यक्त्ववर्धकत्व । सम्यक्त्वक्रियाया लक्षणम् ।

२ तद्विपरीतप्रवृत्तिरूपत्व मिथ्याक्रियालक्षणम् ।

३ गमनागमनादिचेष्टाविषयकप्रवृत्तिनिमित्तकत्व प्रयोगक्रियाया लक्षणम् ।

४ योगत्रयकृतपुद्गलादानरूपत्व समादानक्रियाया लक्षणम् । अथवा योग निवृत्तिसमयपुद्गलग्रहणरूपत्व तत्र धावनवल्गनादिरूप कायव्यापार । पुरुषानृतादि रूपो वाग्व्यापार । अभिद्रोहादिरूपो मनोव्यापार ।

५ इर्यापथस्यकारणरूपत्वमीर्यापथिकक्रियाया लक्षणम् ।

६ कायचेष्टाविशेषरूपत्व कायिकक्रियाया लक्षणम् ।

७ खड्गादिनिर्वर्तनरूपत्वमधिकरणक्रियाया लक्षणम् ।

८ मात्सर्यकरणरूपत्व प्रादेषिकक्रियाया लक्षणम् ।

९ दु खोत्पादनरूपत्व परितापन्या क्रियाया लक्षणम् ।

१० प्रमत्तयोगात्प्राणातिपातरूपत्व प्राणातिपातक्रियाया लक्षणम् ।

११ अश्वादिचित्रकर्मक्रियादर्शनार्थं गमनरूपत्व दार्शिक्या क्रियाया लक्षणम् ।

१२ रागादिना जीवादीना स्पृशत पृच्छतो या क्रिया तत्करणरूपत्व स्पर्शन प्रत्ययिकक्रियाया लक्षणम् ।

१३ जीवादीनाभित्य या क्रिया तत्करणरूपत्व प्रतीत्यक्रियाया लक्षणम् ।

१४ इषवशादश्वरथादिक श्लाघयतो या क्रिया तत्करणरूपत्व सामन्तोपनिपातिक्या क्रियाया लक्षणम् ।

१५ अदृष्ट्वाऽप्रमृज्य च भूमौ वस्त्रपात्राद्यादाननिक्षेपादिरूपत्व अथवा उपयोग राहित्येन क्रियाया प्रवृत्तिकरणरूपत्व अनाभोगिकक्रियाया लक्षणम् ।

१६ स्वहस्तगृहीतजीवादिना जीव मारयतो या क्रिया तत्करणरूपत्व स्वाहस्तिक्या क्रियाया लक्षणम्

निसर्गविदारणानयनानवकाङ्क्ष आरम्भपरिग्रहमायामिथ्यादर्शनाप्रत्याख्यानक्रिया इति ॥ ६ ॥

तीव्रमन्दज्ञाताज्ञातभाववीर्य्याधिकरणविशेषेभ्यस्तद्विशेषः ॥ ७ ॥

साम्परायिकास्रवाणां एषामेकोनचत्वारिंशत्साम्परायिकाणां तीव्रभावात् मन्दभावाज्ज्ञातभावादज्ञातभावाद्वीर्यविशेषादधिकरणविशेषाच्च विशेषो भवति । लघुर्लघुतरो लघुतमस्तीव्रस्तीव्रतरस्तीव्रतम इति । तद्विशेषाच्च बन्धविशेषो भवति ॥ ७ ॥

अत्राह । तीव्रमन्दादयो भावा लोकप्रतीताः वीर्यं च जीवस्य क्षायोपशमिकः क्षायिको वा भावः इत्युक्तम् । अथाधिकरणं किमिति अत्रोच्यते—

---

१ यन्त्रादिना जीवाजीवादीन् निसृजतो या क्रिया तत्करणरूपत्वं नैसर्गिक्याः क्रियाया लक्षणम्, अथवा पापादानादिना प्रवृत्तिविशेषाभ्युपगमकरणरूपत्वम् ।

२ अन्याचरितपापानां प्रकाशनरूपत्वं विदारणक्रियाया लक्षणम् ।

३ आनयनं समुद्दिश्य स्वपरे क्रियाकरणरूपत्वमानयनक्रियाया लक्षणम् ।

४ जिनोक्तकर्तव्यविधिषु प्रमादवशतोऽनादररूपत्वमनवकाङ्क्षक्रियाया लक्षणम्।

५ छेदनभेदनताडनतर्जनादिकर्मविषयकप्रवृत्तिकरणरूपत्वमारम्भक्रियाया लक्षणम् ।

६ सचित्तादिद्रव्येषु ममेति ममत्वकरणरूपत्वं परिग्रहक्रियाया लक्षणम् ।

७ दाम्भिकवृत्तितया मनोवाक्कायानां प्रवृत्तौ प्रेरकत्वं मायाप्रत्ययिकक्रियाया लक्षणम् ।

८ चारित्रमोहनीयोदये सति सावद्ययोगादिषु प्रवृत्तिरूपत्वमप्रत्याख्यानक्रियाया लक्षणम् ।

९ प्रकृष्टकर्मबन्धजघन्यकर्मबन्धरूपपरिणामतारतम्यापयोगानुपयोगपूर्वकप्राणातिपातादिप्रवृत्तिपराक्रमवीर्यविशेषशस्त्राद्यधिकरणविशेषैः साम्परायिकास्रवेषु विशेषो द्रष्टव्यः ।

१० अ २ सू ४, ५

## अधिकरण जीवाजीवाः ॥ ८ ॥

अधिकरण द्विविधम् । द्रव्याधिकरण भावाधिकरणं च । तत्र द्रव्याधिकरण छेदनभेदनादि शस्त्र च दशविधम् । भावाधिकरण-मष्टोत्तरशतविधम् । एतदुभय जीवाधिकरणमजीवाधिकरण च ॥८॥ तत्र—

## आद्य सरम्भसमारम्भारम्भयोगकृतकारितानुमत-कषायविशेषैस्त्रिस्त्रिस्त्रिश्चतुश्चैकश ॥ ९ ॥

आद्यमिति सूत्रक्रमप्रामाण्याज्जीवाधिकरणमाह । तत्सक्षेपतस्त्रिविधम् । सरम्भ समारम्भ आरम्भं इति । एतत्पुनरेकश कायवाङ्मनोयोगविशेषात्त्रिविध भवति । तद्यथा—कायसरम्भ वाक्सरम्भ मन सरम्भ, कायसमारम्भ वाक्समारम्भ मन समारम्भ कायारम्भ वागारम्भ मनआरम्भ इति । एतदप्येकश कृतकारितानुमतविशेषात्त्रिविध भवति । तद्यथा—कृतकायसरम्भ कारितकायसरम्भ अनुमतकायसरम्भ कृतवाक्सरम्भ कारितवाक्सरम्भ अनुमतवाक्सरम्भ कृतमन सरम्भ कारितमन सरम्भ अनुमतमन

---

१ छेदनदहनभारणोपघातस्नेहक्षाराम्लानुप्रयुक्त मनोवाक्कायलक्षणाधिकरणभेदान् । छेदनादीनि प्रासद्धानि । अनुप्रयुक्त स मनोवाक्कायादिना या या चेष्टा निवर्तयति तया तया कर्म बध्यत इत्येव रूपत्वमनुप्रयुक्तमनोवाक्कायलक्षणाधिकरणस्य लक्षणम् ।

२ भाव तीव्रादिरूपात्मपरिणाम स एवाधिकरण भावाधिकरणम् । अ ६ सू ९

३ प्राणातिपातादिविषयकसकल्पावेशरूपत्व सरम्भस्य लक्षणम् ।

४ प्राणातिपातादिविषयकसाधनसनिपातजनितपरितापनादिरूपत्व समारम्भस्य लक्षणम् ।

५ प्राणातिपातादिरूपक्रियानिवृत्तिरूपत्वमारम्भस्य लक्षणम् ।

संरम्भ' एवं समारम्भारम्भावपि ॥ तदपि पुनरेकश. कषायविशेषाच्चतुर्विधम् । तद्यथा–क्रोधकृतकायसरम्भः मानकृतकायसरम्भः मायाकृतकायसरम्भः लोभकृतकायसरम्भः क्रोधकारितकायसरम्भः मानकारितकायसरम्भ मायाकारितकायसरम्भ. लोभकारितकायसरम्भ क्रोधानुमतकायसरम्भ मानानुमतकायसरम्भ. माया नुमतकायसरम्भः लोभानुमतकायसरम्भ. । एवं वाङ्मनोयो गाभ्यामपि वक्तव्यम् । तथा समारम्भारम्भौ । तदेव जीवाधिकरण समासेनैकश. षट्त्रिंशद्विकल्प भवति । त्रिविधमप्यष्टोत्तरशतविकल्प भवतीति ॥

**सरम्भ सकषाय' परितापनया भवेत्समारम्भ. ।**
**आरम्भ. प्राणिवधस्त्रिविधो योगस्ततो ज्ञेय' ॥ ९ ॥**

**निर्वर्तनानिक्षेपसयोगनिसर्गा द्विचतुर्द्वित्रिभेदा. परम्॥१०॥**

परमिति सूत्रक्रमप्रामाण्यादजीवाधिकरणमाह । तत्समासतश्चतुर्विधम् । तद्यथा—निर्वर्तना निक्षेप' सयोगो निसर्ग इति ॥ तत्र निर्वर्तनाधिकरण द्विविधम्।मूलगुणनिर्वर्तनाधिकरणमुत्तरगुणनिर्वर्तनाधिकरण च । तत्र मूलगुणनिर्वर्तना पञ्च, शरीराणि वाङ्मन प्राणापानाश्च । उत्तरगुणनिर्वर्तना काष्ठपुस्तचित्रकर्मादीनि ॥ निक्षेपाधिकरण चतुर्विधम् । तद्यथा—अप्रत्यवेक्षितनिक्षेपाधिकरण दुष्प्रमार्जित-

१ औदारिकशरीरप्रायोग्यवर्गणाद्रव्यैर्निर्मापित यदौदारिकसस्थान तत्प्रथमसमयादारभ्य मूलगुणनिवर्तनाधिकरण भवति ।

२ तादृशस्यौदारिकस्याङ्गोपाङ्गकर्णवेधावयवसस्थानादिक तु मूलापेक्षयोत्तरगुण निर्वर्तनाधिकरण भवति ।

३ अप्रत्यवेक्षितभूप्रदेशे निक्षेप्य वस्त्रादिवस्तुनो निक्षेपकरणरूपत्वमप्रत्यवेक्षितनिक्षेपाधिकरणस्य लक्षणम् ।

४ दुष्प्रमार्जितभूप्रदेशे निक्षेप्य वस्त्रादिवस्तुनो दुष्प्रमार्जितरजोहरणेनाप्रमार्जितेन वा निक्षेपकरणरूपत्व दुष्प्रमार्जितनिक्षेपाधिकरणस्य लक्षणम् ।

निक्षेपाधिकरण सहसानिक्षेपाधिकरणमनाभोगनिक्षेपाधिकरणमिति । सयोगाधिकरण द्विविधम् । भक्तपानसयोजनाधिकरणमुपकरणसयोजनाधिकरण च ॥ निसर्गाधिकरण त्रिविधम् । कायनिसर्गाधिकरणं वाङ्निसर्गाधिकरण मनोनिसर्गाधिकरणमिति ॥ १० ॥

अत्राह । उक्त भवता सकषायाकषाययोर्योग साम्परायिकेर्यापथयोरास्रव इति साम्परायिक चाष्टविध वक्ष्यते । तत् किं सर्वस्याविशिष्ट आस्रव आहोस्वित्प्रतिविशेषोऽस्तीति । अत्रोच्यते । सत्यपि योगत्वाविशेषे प्रकृतिं कृतिं प्राप्यास्रवविशेषो भवति । तद्यथा—

---

१ अप्रमार्जिते दुष्प्रमार्जिते देशे निक्षेप्य वस्तुनो निक्षेपकरणरूपत्व देशनिक्षेपाधिकरणस्य लक्षणम् ।

२ अनुपयोगपूर्वकप्रत्यवेक्षिते सुप्रमार्जिते वा देशे निक्षेप्य वस्तुनो निक्षेपकरणरूपत्वमनाभोगिक निक्षेपाधिकरणस्य लक्षणम् ।

३ सयोजन मिश्रीकरण । तच्च सयोजनाधिकरण द्विविधम् ।

४ निसर्ग उत्सर्ग त्याग इत्यर्थ । शस्त्रपाटनाग्निजलप्रवेशोद्बन्धनविषप्रयोगादिभि शरीरस्य त्यागकरणरूपत्व कायनिसर्गाधिकरणस्य लक्षणम् ।

५ भाषात्वेनापादितवचनवर्गणापुद्गलानामुपदेशादिभिस्त्यागकरणरूपत्व वाङ्निसर्गाधिकरणस्य लक्षणम् ।

६ मनस्त्वेन परिणतमनोवर्गणाद्रव्याणा चिन्तनादिद्वारा त्यागकरणरूपत्व मनोनिसर्गाधिकरणस्य लक्षणम् ।

७ अ ६ सू ५

८ अ ६ सू २६

तत्प्रदोषनिह्नवमात्सर्यान्तरायासादनोपघाता ज्ञानदर्शनावरणयो ॥ ११ ॥

आस्रवो ज्ञानस्य ज्ञानवता ज्ञानसाधनाना च प्रदोषो निह्नवो मात्सर्यमन्तराय आसादन उपघात इति ज्ञानावरणास्रवा भवन्ति। एतैर्हि ज्ञानावरण कर्म बध्यते ॥ एवमेव दर्शनावरणस्येति ॥ ११ ॥

दु खशोकतापाक्रन्दनवधपरिदेवनान्यात्मपरोभयस्थान्यसद्वेद्यस्य ॥ १२ ॥

दु ख शोकस्ताप आक्रन्दन वध परिदेवनमित्यात्मसस्थानि परस्य क्रियमाणान्युभयोश्च क्रियमाणान्यसद्वेद्यस्यास्रवा भवन्तीति ॥ १२ ॥

भूतव्रत्यनुकम्पा दान सरागसयमादियोग क्षान्ति. शौचमिति सद्वेद्यस्य ॥ १३ ॥

सर्वभूतानुकम्पा अगारिष्वनगारिषु च व्रतिष्वनुकम्पाविशेषो

---

१ अ ८ सू ७, ८

२ ज्ञानिसाध्वादीना ज्ञानसाधकपुस्तकादीना च प्रत्यनीकत्वेनानिष्टाचरणरूपत्वं ज्ञानज्ञानिविषयकान्तरिका प्रीतिकरणरूपत्व वा प्रदोषस्य लक्षणम्।

३ न मयातत्समीपेऽधीतमित्यपलापकरणरूपत्व निह्नवस्य लक्षणम्।

४ दानार्हेऽपि ज्ञान कुतश्चित्कारणादयोग्यापादनरूपत्व मात्सर्यस्य लक्षणम्।

५ ज्ञानाध्ययनादीना व्यवच्छेदकरणरूपत्वमन्तरायस्य लक्षणम्।

६ मनोवाग्भ्या ज्ञानस्य वर्जनरूपत्वमासादनस्य लक्षणम्।

७ प्रशस्तज्ञानादीना दोषोद्भावनरूपत्वमुपघातस्य लक्षणम्।

८ अ ८ सू ७

९ एवमुक्तेन प्रकारेण दर्शनस्य दर्शनवता दर्शनसाधनाना च प्रदोषादय आलस्यादयश्च दर्शनावरणस्यास्रवा भवन्ति।

१० अ ८ सू ८

११ अ ८ सू ९

१२ अ ७ सू १५

१३ अ ७ सू १३

अनगारिप्रतिष्टत्ति । पृ १३३



अकबरबादशाहमोगलसम्राट्  जगद्गुरुश्रीहीरविजयसूरीश्वर ।

केवलिप्रतिकृति। पृ १३३



पूज्यसर्वलब्धिपात्रगणधरश्रीगौतमस्वामी।

दान सरागसंयम, संयमासंयमोऽकामनिर्जरा बालतपो योग क्षान्ति शौचमिति सद्वेद्यस्यास्रवा भवन्ति ॥ १३ ॥

केवलिश्रुतसङ्घधर्मदेवावर्णवादो दर्शनमोहस्य ॥ १४ ॥

भगवता परमर्षीणा केवलिनामर्हत्प्रोक्तस्य च साङ्गोपाङ्गस्य श्रुतस्य चातुर्वर्ण्यस्य सङ्घस्य पञ्चमहाव्रतसाधनस्य धर्मस्य चतुर्विधा-ना च देवानामवर्णवादो दर्शनमोहस्यास्रवा इति ॥ १४ ॥

कषायोदयात्तीव्रात्मपरिणामश्चारित्रमोहस्य ॥ १५ ॥

कषायोदयात्तीव्रात्मपरिणामश्चारित्रमोहस्यास्रवो भवति॥१५॥

बह्वारम्भपरिग्रहत्व च नारकस्यायुष ॥ १६ ॥

बह्वारम्भता बहुपरिग्रहता च नारकस्यायुष आस्रवो भवति ॥ १६ ॥

माया तैर्यग्योनस्य ॥ १७ ॥

माया तैर्यग्योनस्यायुष आस्रवो भवति ॥ १७ ॥

अल्पारम्भपरिग्रहत्व स्वभावमार्दवार्जव च मानुषस्य॥१८॥

अल्पारम्भपरिग्रहत्व स्वभावमार्दवार्जव च मानुषस्यायुष आस्रवो भवति ॥ १८ ॥

---

१ अ ७ सू ३३
२ अ ९ सू २०
३ अ ८ सू १०
४ साधु २साध्वी ३ श्रावक ४ श्राविका ।
५ अ ७ सू १
६ अ ८ सू ११, १२ १३, २०
७ अ ८ सू १०
८ अ ८ सू ११

निःशीलव्रतत्वं च सर्वेषाम् ॥ १९ ॥

निःशीलव्रतत्वं च सर्वेषां नारकतैर्यग्योनमानुषाणामायुषामास्रवो भवति। यथोक्तानि च ॥ १९ ॥

अथ दैवस्यायुषः क आस्रव इति। अत्रोच्यते—

सरागसंयमसंयमासंयमाकामनिर्जराबालतपांसि दैवस्य।२०।

संयमो विरतिर्व्रतमित्यनर्थान्तरम्। 'हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतम्' इति वक्ष्यते॥ संयमासंयमो देशविरतिरणुव्रतमित्यनर्थान्तरम्।'देशसर्वतोऽणुमहती' इत्यपि वक्ष्यते॥ अकामनिर्जरा पराधीनतयानुरोधाच्चाकुशलनिवृत्तिराहारादिनिरोधश्च॥ बालतपः। बालो मूढ इत्यनर्थान्तरम्। तस्य तपो बालतपः। तच्चाग्निप्रवेशमरुत्प्रपातजलप्रवेशादि॥ तदेवं सरागसंयमः संयमासंयमादीनि च दैवस्यायुष आस्रवा भवन्तीति ॥ २० ॥

अथ नाम्नः क आस्रव इति। अत्रोच्यते—

योगवक्रता विसंवादनं चाशुभस्य नाम्नः ॥ २१॥

कायवाङ्मनोयोगवक्रता विसंवादनं चाशुभस्य नाम्न आस्रवो भवतीति ॥ २१ ॥

विपरीतं शुभस्य ॥ २२ ॥

एतदुभयं विपरीतं शुभस्य नाम्न आस्रवो भवतीति ॥२२॥

किं चान्यत्—

---

१ अ ६ सू १६, १७, १८
२ अ ७ सू १
३ अ ७ सू २
४ अ ८ सू १२

दर्शनविशुद्धिर्विनयसम्पन्नता शीलव्रतेष्वनतिचारोऽभीक्ष्णं ज्ञानोपयोगसंवेगौ शक्तितस्त्यागतपसी सङ्घसाधुसमाधिवैयावृत्यकरणमर्हदाचार्यबहुश्रुतप्रवचनभक्तिरावश्यकापरिहाणिर्मार्गप्रभावना प्रवचनवत्सलत्वमिति तीर्थकृत्त्वस्य ॥ २३ ॥

---

१ जिनोक्ततत्त्वविषयकसम्यग्दर्शने निःशङ्कितत्वाद्यष्टाङ्गसेवनरूपत्वं दर्शनविशुद्धेर्लक्षणम्।

२ सम्यग्ज्ञानादौ तद्वत्सु चादरकरणरूपत्वे सति माननिवृत्तिकरणरूपत्वं विनयसम्पन्नताया लक्षणम्।

३ उत्सर्गापवादात्मकसर्वज्ञप्रणीतसिद्धान्तानुसारितया शीलव्रतविषयकानुष्ठानकरणरूपत्वं शीलविषयकानतिचारस्य लक्षणम्।

४ प्रतिक्षणं वाचनापृच्छनानुप्रेक्षाम्नायधर्मोपदेशैरभ्यसनकरणरूपत्वं ज्ञानोपयोगस्य लक्षणम्।

५ जन्मजरामरणादिक्लेशरूपसंसारात् प्रतिक्षणं भयपरिणामरूपत्वं संवेगस्य लक्षणम्।

६ विधिपूर्वकसुपात्रप्रदानरूपत्वं त्यागस्य लक्षणम्।

७ क्षमतापनरूपत्वं तपसो लक्षणम्।

८ सम्यग्ज्ञानादीनामाधारस्य साध्वादिरूपसङ्घस्योपद्रवाभावोत्पादनरूपत्वं समाधेर्लक्षणम्।

९ अ ९ सू २४

१० सङ्घस्य समाधिकरणं, साधोर्वैयावृत्यकरणं, अथवोभयोः समाधिवैयावृत्यकरणम्, अर्हदाचार्यबहुश्रुतप्रवचनेषु यथासम्भवमाशयशुद्धिपूर्वकानुरागरूपत्वं भक्तेर्लक्षणम्।

११ सकलसावद्यविरतिरूपसामायिकाद्यावश्यकानां दिवसरात्र्यभ्यन्तरेऽवश्यतया कर्तव्यानुष्ठानरूपत्वं, षडावश्यकानां ( सामायिक–चतुर्विंशतिस्तव–वन्दनक–प्रतिक्रमण–कायोत्सर्ग–प्रत्याख्यानानि षडावश्यकानि ) यथाकालकरणरूपत्वं वा आवश्यकापरिहाणेर्लक्षणम्।

१२ सम्यग्दर्शनादिमार्गस्य मानं परित्यज्य करणाकरणोपदेशद्वारा प्रकाशनं मार्गप्रभावनाया लक्षणम्।

१३ अर्हच्छासनानुष्ठायिनां श्रुतधराणां बालवृद्धतपस्विशैक्षग्लानादीनां संयमानुग्रहश्रुताध्ययनार्थं वस्त्रपात्रभक्तपानादिप्रदानं, द्रव्यभावतः साधर्मिकस्नेहकरणरूपत्वं वा प्रवचनवात्सल्यस्य लक्षणम्। एते कुर्वाणो जीवस्तीर्थकरनामकर्म बध्नाति।

१४ अ ८ सू. १२

। परमप्रकृष्टा दर्शनविशुद्धिः । विनयसम्पन्नता च । शीलव्रते-ष्वात्यन्तिको भृशमप्रमादोऽनतिचारः । अभीक्ष्णं ज्ञानोपयोगः संवेगश्च । यथाशक्तितस्त्यागस्तपश्च । सङ्घस्य साधूनां च समाधिवैयावृत्त्यकरणम् । अर्हत्स्वाचार्येषु बहुश्रुतेषु प्रवचने च परमभावविशुद्धियुक्ता भक्तिः । सामायिकादीनामावश्यकानां भावतोऽनुष्ठानस्यापरिहाणिः । सम्यग्दर्शनादेर्मोक्षमार्गस्य निहत्य मानं करणोपदेशाभ्यां प्रभावना । अर्हच्छासनानुष्ठायिनां श्रुतधराणां बालवृद्धतपस्विशैक्षग्लानादीनां च सङ्ग्रहोपग्रहानुग्रहकारित्वं प्रवचनवत्सलत्वमिति । एते गुणाः समस्ता व्यस्ता वा तीर्थकरनाम्न आस्रवा भवन्तीति ॥ २३ ॥

परात्मनिन्दाप्रशंसे सदसद्गुणाच्छादनोद्भावने च नीचैर्गोत्रस्य ॥ २४ ॥

परनिन्दात्मप्रशंसा सद्गुणाच्छादनमसद्गुणोद्भावनं चात्मपरोभयस्थं नीचैर्गोत्रस्यास्रवा भवन्ति ॥ २४ ॥

तद्विपर्ययो नीचैर्वृत्त्यनुत्सेकौ चोत्तरस्य ॥ २५ ॥

उत्तरस्येति सूत्रक्रमप्रामाण्यादुच्चैर्गोत्रस्याह । नीचैर्गोत्रास्रवविपर्ययो नीचैर्वृत्तिरनुत्सेकश्चोच्चैर्गोत्रस्यास्रवा भवन्ति ॥ २५ ॥

विघ्नकरणमन्तरायस्य ॥ २६ ॥

दानादीनां विघ्नकरणमन्तरायस्यास्रवो भवतीति । एते साम्परायिकस्याष्टविधस्य पृथक् पृथगास्रवविशेषा भवन्तीति ॥ २६ ॥

इति तत्त्वार्थाधिगमसूत्रेषु षष्ठोऽध्यायः समाप्तः ॥६॥

---

१।२ अ ८ सू १३
२ अ ८ सू १४

# अथ सप्तमोऽध्यायः।

अत्राह। उक्तं भवता सद्वेद्यस्यास्रवेषु भूतव्रत्यनुकम्पेति, तत्र किं व्रतं को वा व्रतीति। अत्रोच्यते—

हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतम् ॥ १ ॥

हिंसाया अनृतवचनात्स्तेयादब्रह्मतः परिग्रहाच्च कायवाङ्मनोभिर्विरतिर्व्रतम्। विरतिर्नाम ज्ञात्वाभ्युपेत्याकरणम्। अकरणं निवृत्तिरुपरमो विरतिरित्यनर्थान्तरम् ॥ १ ॥

देशसर्वतोऽणुमहती ॥ २ ॥

एभ्यो हिंसादिभ्य एकदेशविरतिरणुव्रतं सर्वतो विरतिर्महाव्रतमिति ॥२॥

तत्स्थैर्यार्थं भावना पञ्च पञ्च ॥ ३ ॥

तस्य पञ्चविधस्य व्रतस्य स्थैर्यार्थमेकैकस्य पञ्च पञ्च भावना भवन्ति। तद्यथा-अहिंसायास्तावदीर्यासमितिर्मनोगुप्तिरेषणासमितिरादाननिक्षेपणसमितिरालोकितपानभोजनमिति। सत्यवचनस्यानुवीचिभाषणं क्रोधप्रत्याख्यानं लोभप्रत्याख्यानमभीरुत्वं हास्यप्रत्याख्यानमिति ॥ अस्तेयस्यानुवीच्यवग्रहयाचनमभीक्ष्णावग्रहयाचनमेताव-

---

१ अ ७ सू ८, ९, १०, ११, १२

२ अ ९ सू ५

३ अ ९ सू ४

४ आलोचनपूर्वकं भाषणम्।

५ अ ८ सू १०

६ आलोच्यावग्रहो याचनीयः।

दित्यवग्रहावधारणं समानधार्मिकेभ्योऽवग्रहयाचनमनुज्ञापितपानभोजनमिति ॥ ब्रह्मचर्यस्य स्त्रीपशुपण्डकससक्तशयनासनवर्जनं रागसंयुक्तस्त्रीकथावर्जनं स्त्रीणां मनोहरेन्द्रियालोकनवर्जनं पूर्वरतानुस्मरणवर्जनं प्रणीतरसभोजनवर्जनमिति ॥ आकिञ्चन्यस्य पञ्चानामिन्द्रियार्थानां स्पर्शरसगन्धवर्णशब्दानां मनोज्ञानां प्राप्तौ गार्ध्यवर्जनममनोज्ञानां प्राप्तौ द्वेषवर्जनमिति ॥ ३ ॥

किं चान्यदिति ।

हिंसादिष्विहामुत्र चापायावद्यदर्शनम् ॥ ४ ॥

हिंसादिषु पञ्चस्वास्रवेष्विहामुत्र चापायदर्शनमवद्यदर्शनं च भावयेत् । तद्यथा । हिंसायास्तावत् हिंस्रो हि नित्योद्वेजनीयो नित्यानुबद्धवैरश्च । इहैव वधबन्धपरिक्लेशादीन्प्रतिलभते प्रेत्य चाशुभां गतिं गर्हितश्च भवतीति हिंसाया व्युपरमः श्रेयान् ॥ तथानृतवाद्यश्रद्धेयो भवति । इहैव जिह्वाछेदादीन्प्रतिलभते मिथ्याभ्याख्यानदुःखितेभ्यश्च बद्धवैरेभ्यस्तन्निमित्तान्दुःखहेतून्प्राप्नोति प्रेत्य चाशुभां गतिं गर्हितश्च भवतीत्यनृतवचनाद्व्युपरमः श्रेयान् ॥ तथा स्तेनः परद्रव्यहरणसक्तमतिः सर्वस्योद्वेजनीयो भवतीति । इहैव चाभिघातवधबन्धनहस्तपादकर्णनासोत्तरौष्ठच्छेदनभेदनसर्वस्वहरणवध्ययातनमारणादीन्प्रतिलभते प्रेत्य चाशुभां गतिं गर्हितश्च भवतीति स्तेयाद्व्युपरमः श्रेयान् ॥ तथाऽब्रह्मचारी विभ्रमोद्भ्रान्तचित्तः विप्रकीर्णेन्द्रियो मदान्धो गज इव निरङ्कुशः शर्म नो लभते । मोहाभिभूतश्च कार्याकार्यानभिज्ञो न किंचिदकुशलं नारभते । परदाराभिगमनकृतांश्च इहैव वैरानुबन्धलिङ्गच्छेदनवधबन्धनद्रव्यापहारादीन्प्रतिलभतेऽपायान्प्रेत्य चाशुभां गतिं गर्हितश्च भवतीत्यब्रह्मणो व्युपरमः श्रेयानिति॥ तथा परिग्रहवान् शकुनिरिव मांसपेशीहस्तोऽन्येषां क्रव्यादशकुनानामिहैव तस्करादीनां गम्यो भवति॥ अर्जनरक्षणक्षयकृतांश्च दोषान्प्राप्नोति । न चास्य तृप्तिर्भवतीन्धनैरिवाग्नेर्लोभाभिभूतत्वाच्च कार्या-

कार्यानपेक्षो भवति । प्रेत्य चाशुभां गतिं प्राप्नोति लुब्धोऽयमिति च गर्हितो भवतीति परिग्रहाद्व्युपरमः श्रेयान् ॥ ४ ॥

किं चान्यत्—

दुःखमेव वा ॥ ५ ॥

दुःखमेव वा हिंसादिषु भावयेत् ॥ यथा ममाप्रियं दुःखमेवं सर्वसत्त्वानामिति हिंसाया व्युपरमः श्रेयान् ॥ यथा मम मिथ्याभ्याख्यानेनाभ्याख्यातस्य तीव्रं दुःखं भूतपूर्वं भवति च तथा सर्वसत्त्वानामिति अनृतवचनाद्व्युपरमः श्रेयान् ॥ यथा ममेष्टद्रव्यवियोगे दुःखं भूतपूर्वं भवति च तथा सर्वसत्त्वानामिति स्तेयाद्व्युपरमः श्रेयान् ॥ तथा रागद्वेषात्मकत्वान्मैथुनं दुःखमेव । स्यादेतत्स्पर्शनसुखमिति तच्च न । कुतः । व्याधिप्रतीकारत्वात्कण्डूपरिगतवच्चाब्रह्मव्याधिप्रतीकारत्वादसुखे ह्यस्मिन्सुखाभिमानो मूढस्य । तद्यथा—तीव्रया त्वक्छोणितमांसानुगतया कण्ड्वा परिगतात्मा काष्ठशकललोष्टशर्करानखशुक्तिभिर्विच्छिन्नगात्रो रुधिरार्द्रः कण्डूयमानो दुःखमेव सुखमिति मन्यते । तद्वन्मैथुनोपसेवीति मैथुनाद्व्युपरमः श्रेयान् ॥ तथा परिग्रहवानप्राप्तप्राप्तनष्टेषु काङ्क्षारक्षणशोकोद्भवं दुःखमेव प्राप्नोतीति परिग्रहाद्व्युपरमः श्रेयान् । इत्येवं भावयतो व्रतिनो व्रते स्थैर्यं भवति ॥ ५ ॥

किं चान्यत्—

मैत्रीप्रमोदकारुण्यमाध्यस्थानि सत्त्वगुणाधिकक्लिश्यमानाविनेयेषु ॥ ६ ॥

भावयेद्यथासङ्ख्यम् । मैत्रीं सर्वसत्त्वेषु । क्षमेऽहं सर्वसत्त्वानाम् । क्षमयेऽहं सर्वसत्त्वान् । मैत्री मे सर्वसत्त्वेषु । वैरं मम न केनचिदिति ॥ प्रमोदं गुणाधिकेषु । प्रमोदो नाम विनयप्रयोगो वन्दनस्तुतिवर्णवाद[1]वैयावृत्त्यकरणादिभिः सम्यक्त्वज्ञान

१ वणवादः श्लाघा ।

चारित्रतपोधिकेषु साधुषु परात्मोभयकृतपूजाजनितः सर्वेन्द्रियाभिव्यक्तो मनःप्रहर्ष इति ॥ कारुण्य क्लिश्यमानेषु । कारुण्यमनुकम्पा दीनानुग्रह इत्यर्थः । तन्महामोहाभिभूतेषु मतिश्रुतविभङ्गाज्ञानपरिगतेषु विषयतर्षाग्निना दन्दह्यमानमानसेषु हिताहितप्राप्तिपरिहारविपरीतप्रवृत्तिषु विविधदुःखार्दितेषु दीनकृपणानाथबालमोमुहवृद्धेषु सत्त्वेषु भावयेत् । तथा हि भावयन् हितोपदेशादिभिस्ताननुगृह्णातीति। माध्यस्थ्यमविनेयेषु । माध्यस्थ्यमौदासीन्यमुपेक्षेत्यनर्थान्तरम् । अविनेया नाम मृत्पिण्डकाष्ठकुड्यभूता ग्रहणधारणविज्ञानोहापोहवियुक्ता महामोहाभिभूता दुष्टावग्राहिताश्च । तेषु माध्यस्थ्य भावयेत्। न हि तत्र वक्तुर्हितोपदेशसाफल्य भवति ॥ ६ ॥

किं चान्यत् ।

जगत्कायस्वभावौ च संवेगवैराग्यार्थम् ॥ ७ ॥

जगत्कायस्वभावौ च भावयेत् संवेगवैराग्यार्थम् । तत्र जगत्स्वभावो द्रव्याणामनाद्यादिमत्परिणामयुक्ताः प्रादुर्भावतिरोभावस्थित्यन्यतानुग्रहविनाशाः । कायस्वभावोऽनित्यता दुःखहेतुत्व निःसारताऽशुचित्वमिति ॥ एव ह्यस्य भावयतः संवेगो वैराग्यं च भवति । तत्र संवेगो नाम ससारभीरुत्वमारम्भपरिग्रहेषु दोषदर्शनादरतिर्धर्मे बहुमानो धार्मिकेषु च धर्मश्रवणे धार्मिकदर्शने च मनःप्रसाद उत्तरोत्तरगुणप्रतिपत्तौ च श्रद्धेति ॥ वैराग्यं नाम शरीरभोगसंसारनिर्वेदोपशान्तस्य बाह्याभ्यन्तरेषूपाधिष्वनभिष्वङ्ग इति ॥७॥

---

१ तर्ष —तृड्पिपासाति । स एवाग्नि परितापकारित्वात् ।

२ मोमुहा —काहला ।

३ वृद्धा —सप्ततिसवत्सरसख्यामतीत्य वर्तमाना । परिम्लानेन्द्रिया परिपेलव स्मृतय ।

४ औदासीन्यम् ।

अत्राह । उक्तं भवता हिंसादिभ्यो विरतिर्व्रतमिति तत्र का हिंसा नामेति । अत्रोच्यते ।

प्रमत्तयोगात्प्राणव्यपरोपणं हिंसा ॥ ८ ॥

प्रमत्तो यः कायवाङ्मनोयोगैः प्राणव्यपरोपणं करोति सा हिंसा । हिंसा मारणं प्राणातिपातः प्राणवधः देहान्तरसंक्रामणं प्राणव्यपरोपणमित्यनर्थान्तरम् ॥ ८ ॥

अत्राह । अथानृतं किमिति । अत्रोच्यते—

असदभिधानमनृतम् ॥ ९ ॥

असदिति सद्भावप्रतिषेधोऽर्थान्तरं गर्हा च ॥ तत्र सद्भावप्रतिषेधो नाम सद्भूतनिह्नवोऽभूतोद्भावनं च । तद्यथा—नास्त्यात्मा नास्ति परलोक इत्यादि भूतनिह्नवः । श्यामाकतण्डुलमात्रोऽयमात्मा अङ्गुष्ठपर्वमात्रोऽयमात्मा आदित्यवर्णो निष्क्रिय इत्येवमाद्यमभूतोद्भावनम् ॥ अर्थान्तरं यो गां ब्रवीत्यश्वमश्वं च गौरिति ॥ गर्हेति हिंसापारुष्यपैशुन्यादियुक्तं वचः सत्यमपि गर्हितमनृतमेव भवतीति ॥ ९ ॥

अत्राह अथ स्तेयं किमिति । अत्रोच्यते—

अदत्तादानं स्तेयम् ॥ १० ॥

स्तेयबुद्ध्या परैरदत्तस्य परिगृहीतस्य तृणादेर्द्रव्यजातस्यादानं स्तेयम् ॥ १० ॥

अत्राह । अथाब्रह्म किमिति । अत्रोच्यते—

मैथुनमब्रह्म ॥ ११ ॥

स्त्रीपुंसयोर्मिथुनभावो मिथुनकर्म वा मैथुनं तदब्रह्म ॥११॥

अत्राह । अथ परिग्रहः क इति । अत्रोच्यते—

मूर्च्छा परिग्रहः ॥ १२ ॥

चेतनावत्स्वचेतनेषु च बाह्याभ्यन्तरेषु द्रव्येषु मूर्च्छा परिग्रहः। इच्छा प्रार्थना कामोऽभिलाषः काङ्क्षा गार्द्ध्यं मूर्च्छेत्यनर्थान्तरम् ॥१२॥

अत्राह। गृह्णीमस्तावद् व्रतानि। अथ व्रती क इति। अत्रोच्यते—

निःशल्यो व्रती ॥ १३ ॥

मायानिदानमिथ्यादर्शनशल्यैस्त्रिभिर्वियुक्तो निःशल्यो व्रती भवति। व्रतान्यस्य सन्तीति व्रती। तदेव निःशल्यो व्रतवान् व्रती भवतीति ॥ १३ ॥

अगार्यनगारश्च ॥ १४ ॥

स एष व्रती द्विविधो भवति। अगारी अनगारश्च। श्रावकः श्रमणश्चेत्यर्थः ॥ १४ ॥

अत्राह। कोऽनयोः प्रतिविशेष इति। अत्रोच्यते—

अणुव्रतोऽगारी ॥ १५ ॥

अणून्यस्य व्रतानीत्यणुव्रतः। तदेवमणुव्रतधरः श्रावकोऽगारी व्रती भवति ॥ १५ ॥

किं चान्यत्—

दिग्देशानर्थदण्डविरतिसामायिकपौषधोपवासोपभोगपरिभोगातिथिसंविभागव्रतसंपन्नश्च ॥ १६ ॥

एभिश्च दिग्व्रतादिभिरुत्तरव्रतैः संपन्नोऽगारी व्रती भवति। तत्र दिग्व्रतं नाम तिर्यगूर्ध्वमधो वा दशानां दिशां यथाशक्ति गमनपरिमाणाभिग्रहः। तत्परतश्च सर्वभूतेष्वर्थतोऽनर्थतश्च सर्वसावद्ययोगनिक्षेपः॥ देशव्रतं नामापवरकगृहग्रामसीमादिषु यथाशक्ति प्रविचाराय परिमाणाभिग्रहः। तत्परतश्च सर्वभूतेष्वर्थतोऽनर्थतश्च सर्वसावद्ययोगनिक्षेपः॥ अनर्थदण्डो नामोपभोगपरिभोगावस्यागारिणो व्रतिनोऽर्थः।

तद्व्यतिरिक्तोऽनर्थः । तदर्थो दण्डोऽनर्थदण्ड. । तद्विरतिर्व्रतम् ॥ सामायिकं नामाभिगृह्य काल सर्वसावद्ययोगनिक्षेपः ॥ पौषधोपवासो नाम पौषधे उपवास पौषधोपवासः । पौषधं. पर्वेत्यनर्थान्तरम् । सोऽष्टमीं चतुर्दशीं पञ्चदशीमन्यतमा वा तिथिमभिगृह्य चतुर्थाद्युपवासिना व्यपगतस्नानानुलेपनगन्धमाल्यालङ्कारेण न्यस्तसर्वसावद्ययोगेन कुशसंस्तारफलकादीनामन्यतम सस्तारमास्तीर्य स्थान वीरासननिषद्यानां वान्यतममास्थाय धर्मजागरिकापरेणानुष्ठेयो भवति ॥ उपभोगपरिभोगव्रत नामाशनपानखाद्यस्वाद्यगन्धमाल्यादीनामाच्छादनप्रावरणालङ्कारशयनासनगृहयानवाहनादीना च बहुसावद्याना वर्जनम् । अल्पसावद्यानामपि परिमाणकरण मिति ॥ अतिथिसंविभागो नाम न्यायागताना कल्पनीयानामन्नपानादीना द्रव्याणा देशकालश्रद्धासत्कारक्रमोपेत परयात्मानुग्रहबुद्ध्या संयतेभ्यो दानमिति ॥ १६ ॥

किं चान्यदिति ।

मारणान्तिकीं सलेखना जोषिता ॥१७॥

कालसंहननदौर्बल्योपसर्गदोषाद्धर्मावश्यकपरिहाणिं वाभितो ज्ञात्वावमौदर्यचतुर्थषष्ठाष्टमभक्तादिभिरात्मान संलिख्य संयम प्रति-

---

१ पोषधशब्द पर्ववाचक । पोष धत्ते पुष्णाति वा धर्मानिति निरुक्तात् ।

२ पृथग्जनस्यानियतानि भक्तानि । मुमुक्षूणा सकृद् भोजनम् । मध्यमजनस्य भक्तद्वयम् । तत्र मध्यमा प्रतिपत्तिमाश्रित्य चतुर्थादितपोगणना । अतीतेऽहनि भुक्त्वा प्रत्याख्यानमित्येको भोजनकाल । द्वितीयेऽहनि भक्तद्वयच्छेद । तृतीयेऽहनि चतुर्थभक्तकाले भुङ्क्त इति चतुर्थभक्तमुच्यते । एक उपवास । आदिग्रहणात् पूर्वगणनयैव षष्ठाष्टमादि समस्ततपोविकल्पग्रहणम् ।

३ निषद्या—समरिफमिवेशन पर्यङ्कधादि ।

४ मर्यादाकरणम् ।

पद्योत्तमव्रतमपन्नश्चतुर्विधाहार प्रत्याख्याय यावज्जीव भावनानुप्रेक्षा परः स्मृतिसमाधिबहुलो मारणान्तिकीं सलेखना जोषिता उत्तमार्थ स्याराधको भवतीति॥

एतानि दिग्व्रतादीनि शीलानि भवन्ति। 'निःशल्यो व्रती' इति वचनादुक्त भवति व्रती नियत सम्यग्दृष्टिरिति ॥१७॥

## शङ्काकाङ्क्षाविचिकित्सान्यदृष्टिप्रशसासस्तवा सम्यग्दृष्टेरतिचारा ॥ १८ ॥

शङ्का काङ्क्षा विचिकित्सा अन्यदृष्टिप्रशसा सस्तव, इत्येते पञ्च सम्यग्दृष्टेरतीचारा भवन्ति। अतिचारो व्यतिक्रम' स्खलन मित्यनर्थान्तरम्॥ अधिगतजीवाजीवादितत्त्वस्यापि भगवतः शासन भावतोऽभिप्रपन्नस्यासहार्यमते' सम्यग्दृष्टेरर्हत्प्रोक्तेषु अत्यन्तसूक्ष्मेष्वतीन्द्रियेषु केवलागमग्राह्येष्वर्थेषु य सदेहो भवति एव स्यादेव न स्यादिति सा शङ्का॥ ऐहलौकिकपारलौकिकेषु विषयेष्वाशसा काङ्क्षा। सोऽतिचार सम्यग्दृष्टे। कुत। काङ्क्षिता ह्यविचारितगुणदोष समयमतिक्रामति॥ विचिकित्सा नाम इदमप्यस्तीदम पीति मतिविप्लुति.॥ अन्यदृष्टिरित्यर्हच्छासनव्यतिरिक्ता दृष्टिमाह। सा द्विविधा। अभिगृहीता अनभिगृहीता च। तद्युक्ताना क्रियावा-

---

१ (१) अशन-सक्तुमुद्गौदनक्षीरदध्यादि (२) पान खजूरद्राक्षापानकोष्णपानकादि (३) खादिम गुच्चास्कुलिकाखण्डेक्षुशर्करादि। (४) स्वादिम एलाफलकपूरलवङ्गपूगीफलनागरादि।

२ अ ७ सू. १३

३ जिनवचनव्यतिरिक्ता दृष्टि-अन्यदृष्टि। असर्वज्ञप्रणीतवचनाभिरति।

४ अभिमुख्य गृहीता। इदमेव तत्त्वमिति बुद्धवचन साख्य कणादादिवचन वा।

५ नैकाभ्याभिमुख्येन गृहीता सर्वप्रवचनेष्वेव साधुदृष्टिरनभिगृहीतमिथ्यादृष्टिरित्यर्थ। सर्वमेव युक्त्युपपन्नमयुक्तिक वासमतया मन्यते मौढ्यात्।

६ क्रिया कर्त्रधीना न कर्ता विना क्रियाया सभव। इति क्रियामात्मसमवायिनीं ये वदन्ति तच्छीला।

दिनामक्रियावादिनामज्ञानिकाना वेनयिकाना च प्रशंसासस्तवौ सम्यग्दृष्टेरतिचार इति। अत्राह। प्रशसासस्तवयो: क. प्रतिविशेष इति। अत्रोच्यते। ज्ञानदर्शनगुणप्रकर्षोद्भावन भावत प्रशसा। सस्तवस्तु सोपधं निरुपध भूताभूतगुणवचनमिति ॥ १८ ॥

व्रतशीलेषु पञ्च पञ्च यथाक्रमम् ॥ १९ ॥

व्रतेषु पञ्चसु शीलेषु च सप्तसु पञ्च पञ्चातिचारा भवन्ति यथाक्रममिति ऊर्ध्वं यद्वक्ष्याम: ॥ १९ ॥

तद्यथा—

बन्धवधविच्छेदातिभारारोपणान्नपाननिरोधा ॥ २० ॥

त्रसस्थावराणा जीवाना बन्धवधौ, त्वक्छेद काष्ठादीना, पुरुषहस्त्यश्वगोमहिषादीना चातिभारारोपण, तेषामेव चान्नपाननिरोध, अहिंसाव्रतस्यातिचारा भवन्ति ॥ २० ॥

मिथ्योपदेशरहस्याभ्याख्यानकूटलेखक्रियान्यासापहारसाकारमन्त्रभेदा ॥ २१ ॥

एते पञ्च मिथ्योपदेशादय सत्यवचनस्यातिचारा भवन्ति। तत्र मिथ्योपदेशो नाम प्रमत्तवचनमयथार्थवचनोपदेशो विवादेष्वतिसंधानोपदेश इत्येवमादि ॥ रहस्याभ्याख्यान नाम स्त्रीपुंसयोः परस्परेणान्यस्य वा रागसयुक्त हास्यक्रीडासङ्गादिभी रहस्येनाभिश-

१ विनयेन चरन्ति वैनयिका। समवधृतलिङ्गाचारशास्त्रविनयप्रतिपत्तिलक्षणा विनयप्रधाना कायेन वाचा मनसा दानेन च चतुर्भि प्रकारै सुरनृपतियतिज्ञातिस्थविराधममातृपितृषु सपर्यां विदधति।

२ सकपटम्।

३ निष्कपटम्।

४ सत्यासत्यगुणकथनम्।

५ कलहेऽन्यतरस्यातिसंधानोपाय वञ्चनोपायमुपदिशति।

सनम् ॥ कूटलेखक्रिया लोकप्रतीता ॥ न्यासापहारो विस्मरणकृत-परनिक्षेपग्रहणम् ॥ साकारमन्त्रभेदः पैशुन्यं गुह्यमन्त्रभेदश्च ॥ २१ ॥

स्तेनप्रयोगतदाहृतादानविरुद्धराज्यातिक्रमहीनाधिकमानोन्मानप्रतिरूपकव्यवहाराः ॥ २२ ॥

एते पञ्चास्तेयव्रतस्यातिचारा भवन्ति । तत्र स्तेनेषु हिरण्यादिप्रयोगः ॥ स्तेनैराहृतस्य द्रव्यस्य मुधा क्रयेण वा ग्रहणं तदाहृतादानम् ॥ विरुद्धराज्यातिक्रमश्चास्तेयव्रतस्यातिचारः । विरुद्धे हि राज्ये सर्वमेव स्तेययुक्तमादानं भवति ॥ हीनाधिकमानोन्मानप्रतिरूपकव्यवहारः कूटतुलाकूटमानवञ्चनादियुक्तः क्रयो विक्रयो वृद्धिप्रयोगश्च । प्रतिरूपकव्यवहारो नाम सुवर्णरूप्यादीनां द्रव्याणां प्रतिरूपकक्रिया व्याजीकरणानि चेत्येते पञ्चास्तेयव्रतस्यातिचारा भवन्ति।२२।

परविवाहकरणेत्वरपरिगृहीतापरिगृहीतागमनानङ्गक्रीडातीव्रकामाभिनिवेशाः ॥ २३ ॥

परविवाहकरणमित्वरपरिगृहीतागमनमपरिगृहीतागमनमनङ्गक्रीडा तीव्रकामाभिनिवेश इत्येते पञ्च ब्रह्मचर्यव्रतस्यातिचारा भवन्ति ॥ २३ ॥

क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदासकुप्यप्रमाणातिक्रमाः ॥ २४ ॥

क्षेत्रवास्तुप्रमाणातिक्रमः, हिरण्यसुवर्णप्रमाणातिक्रमः धनधान्यप्रमाणातिक्रमः दासीदासप्रमाणातिक्रमः कुप्यप्रमाणातिक्रम इत्येते पञ्चेच्छापरिमाणव्रतस्यातिचारा भवन्ति ॥ २४ ॥

---

* इत्वरी-कुल्टा । प्रतिपुरुषगमनशीलाया साधारणस्त्रिया किंचित्काल भाटिप्रदानादिना ग्रहणपूर्वकगमनपूर्वकगमनत्वमित्वरागमनस्य लक्षणम् ।

ऊर्ध्वाधस्तिर्यग्व्यतिक्रमक्षेत्रवृद्धिस्मृत्यन्तर्धानानि ॥ २५ ॥

ऊर्ध्वव्यतिक्रमः अधोव्यतिक्रम तिर्यग्व्यतिक्रमः क्षेत्रवृद्धि स्मृत्यन्तर्धानमित्येते पञ्च दिग्व्रतस्यातिचारा भवन्ति । स्मृत्यन्तर्धान नाम स्मृतेर्भ्रंशोऽन्तर्धानमिति ॥ २५ ॥

आनयनप्रेष्यप्रयोगशब्दरूपानुपातपुद्गलक्षेपा. ॥ २६ ॥

द्रव्यस्यानयन प्रेष्यप्रयोग. शब्दानुपात रूपानुपातः पुद्गल क्षेप इत्येते पञ्च देशव्रतस्यातिचारा भवन्ति ॥ २६ ॥

कन्दर्पकौकुच्यमौखर्यासमीक्ष्याधिकरणोपभोगाधिकत्वानि ॥ २७ ॥

कन्दर्प. कौकुच्य मौखर्यमसमीक्ष्याधिकरणमुपभोगाधिकत्वमित्येते पञ्चानर्थदण्डविरतिव्रतस्यातिचारा भवन्ति । तत्र कन्दर्पो नाम रागसयुक्तोऽसभ्यो वाक्प्रयोगो हास्य च ॥ कौकुच्य नाम एतदेवोभय दुष्टकायप्रचारसयुक्तम् ॥ मौखर्यमसबद्धबहुप्रलापित्वम्॥ असमीक्ष्याधिकरण लोकप्रतीतम् ॥ उपभोगाधिकत्वं चेति ॥ २७॥

योगदुष्प्रणिधानानादरस्मृत्यनुपस्थापनानि ॥ २८ ॥

कायदुष्प्रणिधान वाग्दुष्प्रणिधान मनोदुष्प्रणिधानमनादर स्मृत्यनुपस्थापनमित्येते पञ्च सामायिकव्रतस्यातिचारा भवन्ति ।२८।

---

१ शरीरावयवाना पाणिपादादीनामनिभृततावस्थापनरूपत्वम् ।

२ वणसस्कारामावे सति अयानयगामरूपत्वम् ।

३ शोचन्मोमादिकर्यव्यासगजन्यसंभ्रमरूपत्वम् ।

४ अनुत्साह

५ स्मृत्यभाव ।

अप्रत्यवेक्षिताप्रमार्जितोत्सर्गादाननिक्षेपसंस्तारोपक्रमणाना-
दरस्मृत्यनुपस्थापनानि ॥ २९ ॥

अप्रत्यवेक्षिताप्रमार्जिते उत्सर्गः, अप्रत्यवेक्षिताप्रमार्जितस्यादाननिक्षेपौ अप्रत्यवेक्षिताप्रमार्जितः संस्तारोपक्रमः, अनादरः स्मृत्यनुपस्थापनमित्येते पञ्च पौषधोपवासस्यातिचारा भवन्ति ॥२९॥

सचित्तसम्बद्धसम्मिश्राभिषवदुष्पक्वाहाराः ॥ ३० ॥

सचित्ताहारः सचित्तसम्बद्धाहारः सचित्तसम्मिश्राहारः अभिषवाहारः दुष्पक्वाहार इत्येते पञ्चोपभोगव्रतस्यातिचारा भवन्ति ॥३०॥

सचित्तनिक्षेपपिधानपरव्यपदेशमात्सर्यकालातिक्रमाः ॥३१॥

अन्नादेर्द्रव्यजातस्य सचित्ते निक्षेपः सचित्तापिधानं परस्येदमिति परव्यपदेशः मात्सर्यं कालातिक्रम इत्येते पञ्चातिथिसंविभागस्यातिचारा भवन्ति ॥ ३१ ॥

जीवितमरणाशंसामित्रानुरागसुखानुबन्धनिदान-
करणानि ॥ ३२ ॥

जीविताशंसा मरणाशंसा मित्रानुरागः सुखानुबन्धो निदानकरणमित्येते मारणान्तिकसंलेखनायाः पञ्चातिचारा भवन्ति ॥

---

१ प्रत्यवेक्षणं चक्षुषा निरीक्षणं स्थण्डिलस्य सचित्ताचित्तमिश्रस्थावरजङ्गमजन्तुशून्यस्य ।

२ प्रमार्जनं वस्त्रप्रान्तादिना विशुद्धकरणम् ।

३ मूलकन्दफलादीनां पृथ्वीकायादीनां वा सचित्तानामाहारः ।

४ सचित्तेन सम्बद्धं कर्कटिकपक्वखर्जूरोदुम्बराम्रफलादि भक्षयतः सचित्तसम्बद्धाहारत्वम् ।

५ सचित्तेन सम्मिश्राहारः—पुष्पफलार्द्रितिलादिना मिश्रः । मोदकादिराहारस्य वा पिपीलिकादिसूक्ष्मजन्तुमिश्रस्याभ्यवहारः ।

६ सुरासौवीरकमांसप्रकारसुरणादनेकद्रव्यसन्धानानिष्पन्नः ।

७ दुष्पक्वः मन्दपक्वमर्धपक्वतन्दुलपृथुकयवगोधूमस्थूलमण्डकादि । तस्याभ्यवहारे ऐहिकप्रत्यपायकारी यावता भावेन सचेतनस्तावता परलोकमप्युपहन्ति ।

८ आशंसा—अभिलाषा ।

तदेतेषु सम्यक्त्वव्रतशीलव्यतिक्रमस्थानेषु पञ्चषष्टिष्व-तिचारस्थानेषु अप्रमादो न्याय इति ॥ ३२ ॥

अत्राह । उक्तानि व्रतानि व्रतिनश्च । अथ दानं किमिति । अत्रोच्यते—

अनुग्रहार्थं स्वस्यातिसर्गो दानम् ॥ ३३ ॥

आत्मपरानुग्रहार्थं स्वस्य द्रव्यजातस्यान्नपानवस्त्रादेः पात्रेऽ-तिसर्गो दानम् ॥ ३३ ॥

विधिद्रव्यदातृपात्रविशेषात्तद्विशेषः ॥ ३४ ॥

विधिविशेषाद् द्रव्यविशेषाद् दातृविशेषात्पात्रविशेषाच्च तस्य दानधर्मस्य विशेषो भवति । तद्विशेषाच्च फलविशेषः ॥ तत्र विधि विशेषो नाम देशकालसंपच्छ्रद्धासत्कारक्रमाः कल्पनीयत्वमित्येव मादि ॥ द्रव्यविशेषोऽन्नादीनामेव सारजातिगुणोत्कर्षयोगः ॥ दा-तृविशेषः प्रतिग्रहीतर्यनसूया, त्यागेऽविषादः अपरिभाविता, दित्स-तो ददतो दत्तवतश्च प्रीतियोगः, कुशलाभिसंधिता, दृष्टफलानपेक्षिता निरुपधत्वमनिदानत्वमिति ॥ पात्रविशेषः सम्यग्दर्शनज्ञानचारित्र-तपःसंपन्नता इति ॥ ३४ ॥

इति तत्त्वार्थाधिगमेऽर्हत्प्रवचनसंग्रहे सप्तमोऽध्यायः समाप्तः ॥ ७ ॥

---

१ विजितेन्द्रियकषायं स्वाध्यायनयोध्यानसमाधिमाक् मूलोत्तरगुणसंपदुपेतं पात्रमिष्यते ।

# अष्टमोऽध्यायः ।



उक्त आस्रव बन्ध वक्ष्याम । तत्प्रसिद्ध्यर्थमिदमुच्यते ।

मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः ॥ १ ॥

मिथ्यादर्शन अविरतिः प्रमादः कषाया योगा इत्येते पञ्च बन्धहेतवो भवन्ति । तत्र सम्यग्दर्शनाद्विपरीत मिथ्यादर्शनम् । तद् द्विविधमभिगृहीतमनभिगृहीत च । तत्राभ्युपेत्यासम्यग्दर्शनपरिग्रहोऽभिगृहीतमज्ञानिकादीनां त्रयाणां त्रिषष्ठीनां कुवादिशतानाम् ।

१ अज्ञान अभ्युपगमद्वारेण येषामस्ति ते अज्ञानिका त एव वादिनोऽज्ञानिकवादिन , अज्ञानमेव श्रेय इत्येव प्रतिज्ञा इत्यर्थ , विनय एव वैनयिक तदेव नि श्रेयसायेत्येववादिनो वैनयिकवादिन इति । एतद्भेदसख्या चेयम् ' असियसय किरियाण अकिरियवाइण होइ चुलसीइ । अन्नाणिय सत्तट्ठी वेणइयाण च बत्तीसा ॥१॥' ( क्रियावादिना अशीत्यधिक शत अक्रियावादिना चतुरशीतिरज्ञानिना सप्तषष्टि वैनयिकाना द्वात्रिंशत्॥१॥ इति) तत्राशीत्यधिक शत, क्रियावादिना भवति, इद चामुनोपायेनावगन्तव्यम् जीवाजीवाश्रवसवरबन्धनिर्जरापुण्यापुण्यमोक्षाख्यान नवपदार्थान् विरचय्य परिपाट्या जीवपदार्थस्याध स्वपरभेदावुपन्यसनीयौ तयोरधो नित्यानित्यभेदौ तयोरप्यध कालेश्वरात्मनियतिस्वभावभेदा पञ्च न्यसनीया , पुनश्चेत्थ विकल्पा कर्तव्या - अस्ति जीव स्वतो नित्य कालत इत्येको विकल्प , विकल्पार्थश्चायम्–विद्यते खल्वयमात्मा स्वेन रूपेण न परापेक्षया ह्रस्वत्वदीर्घत्वे इव नित्यश्च कालवादिन , उक्तेनैवाभिलापेन द्वितीयो विकल्प ईश्वरकारणिन , तृतीयो विकल्प आत्मवादिन 'पुरुष एवेद ग्नि' मित्यादि प्रतिपत्तुरिति, चतुर्थो नियतिवादिन , नियतिश्च–पदार्थानामवश्यन्तया यथाथा भवने प्रयोजककर्त्रीति पञ्चम स्वभाववादिन । एव स्वत अजहता लब्धा पञ्च विकल्पा , परत इत्यनेनापि पञ्चैव लभ्यन्ते, तत्र परत इत्यस्यायमर्थ –इह सर्वपदार्थाना पररूपापेक्ष स्वरूपपरिच्छेदो यथा ह्रस्वत्वापेक्षो दीर्घत्वादिपरिच्छेद एवमेव चात्मन स्तम्भकुम्भादीन् समीक्ष्य तद्व्यतिरिक्ते हि वस्तुन्यात्मबुद्धि प्रवर्तत इत्यतो यदात्मन स्वरूप तत्परत एवावधार्यते न स्वत इति, नित्यत्वापरित्यागेन चैते दशविकल्पा , एवमनित्यत्वेनापि दशैव, एव विंशतिर्जीवपदार्थेन लब्धा अजीवादिष्वप्यष्टस्वेवमेव प्रतिपद विंशतिर्विकल्पानामतो विंशतिर्नवगुणा शतमशीत्युत्तर क्रियावादिनामिति । एते च विकल्पा एवैकशो न लभ्यन्ते शीलाङ्गवदिति । तथा अक्रियावादिना तु चतुरशीतिर्द्रष्टव्या, एव चेय पुण्यापुण्यविवर्जितपदार्थ

समवन्यासस्तथैव जीवस्याथ स्वपररूपविकल्पद्वयोपन्यास, असत्वादात्मनो नित्यानित्यभेदो न स्त, कालादीना तु पचाना षष्ठी यदृच्छा न्यस्यते, इय चानाभिसंधिपूर्वं कार्यप्राप्तिरिति, पश्चाद्विकल्पाभिलाप –नास्ति जीव स्वत कालत इत्येको विकल्प, एवमीश्वरादिभिरपि यदृच्छावसानै सर्वे षड्विकल्पा, तथा नास्ति जीव परत कालत इति षडेव विकल्पा इत्येकत्र द्वादश, एवमजीवादिष्वपि षट्सु प्रत्येक द्वादश विकल्पा, एव च द्वादश सप्तगुणाश्चतुरशीतिविकल्पा नास्तिकानामिति । अज्ञानिकाना तु सप्तषष्टिर्भवति, इय चामुनोपायेन द्रष्टव्या–तत्र जीवाजीवादीन् नवपदार्थान् पूर्ववत् व्यवस्थाप्य पर्यन्ते चोत्पत्तिमुपन्यस्याध सत सदादय उपन्यसनीया । सत्व १मसत्व २सदसत्त्व ३अवाच्यत्व ४ सदवाच्यत्व ५ असदवाच्यत्व ६ सदसदवाच्यत्व ७ मित, तन एत नव सप्तका त्रिषष्टि, उत्पत्तेस्तु चत्वार एव आद्या विकल्पा, तद्यथा–सत्त्व १ असत्त्व २ सदसत्त्व ३ अवाच्यत्व ४ चेति, त्रिषष्टिमध्ये क्षिप्ता सप्तषष्टिर्भवन्ति । विकल्पाभिलापश्चैव–को जानाति जीव सन्निति किं वा तेन ज्ञातेनत्येको विकल्प, एवमसदादयोऽपि वाच्या, तथा सती भावोत्पत्तिरिति को जानाति किं वा अनया ज्ञातया ? एवमसती सदसती अव त्तव्या चेति, सत्त्वादिसप्तभङ्गयाश्चायमर्थ —स्वरूपमात्रापेक्षया वस्तुन सत्व १ स्वरूपमात्रापेक्षया त्वसत्व २ तथा एकस्य घटादिद्रव्यदेशस्य ग्रीवादे सद्भावपर्यायेण ग्रीवात्वादिनादिष्टस्य सत्त्वात्तया घटादिद्रव्यदेशान्यापरस्य बुध्नादेरसद्भावपर्यायेण पृथुत्वादिना परगतपर्यायेणवादिष्टस्यासत्वात् वस्तुन सदसत्त्वम् ३ तथा सकलस्यैवाखण्डितस्य घटादिवस्तुनोऽर्थान्तरभूतै पटादिपर्यायैर्निर्ग्रीवोर्ध्वकुण्डलौष्ठायतवृत्तग्रीवादिभिर्युगपदादिष्टस्य सत्त्वेनासत्त्वेन वा वक्तुमशक्यत्वात् तस्य घटादेर्द्रव्यस्यावक्तव्यत्वम् ४ तथा घटादिद्रव्यस्यैकदेशस्य सद्भावपर्यायेणादिष्टस्य सत्त्वादपरस्य स्वपरपर्यायैर्युगपदादिष्टतया सत्त्वेनासत्त्वेन वा वक्तुमशक्यत्वात् घटादिद्रव्यस्य सदवक्तव्यमिति ५ तथा तस्यैव घटादिद्रव्यस्यैकदेशस्य परपर्यायैरादिष्टस्यासत्त्वादपरदेशस्य स्वपरपर्यायैर्युगपदादिष्टत्वेन तथैव वक्तुमशक्यत्वात् तस्य घटादेरसदवक्तव्यत्वम् ६ तथा घटादिद्रव्यस्यैकदेशस्य स्वपर्यायैरादिष्टत्वेन सत्त्वादपरस्य परपर्यायैरादिष्टतया असत्त्वादन्यस्य स्वपरपर्यायैर्युगपदादिष्टस्य तथैव वक्तुमशक्यत्वेनावक्तव्यत्वात् तस्य घटादिद्रव्यस्य सदसदवक्तव्यत्वमिति ७ इह च प्रथमद्वितीयचतुर्था अखण्डवस्त्वाश्रिता शेषाश्चत्वारो वस्तुदेशाश्रिता दर्शिता, तथान्यै स्तृतीयोऽपि विकल्पो ऽखण्डवस्त्वाश्रित एवोक्त, तथाहि–अखण्डस्य वस्तुन स्वपर्यायै परपर्यायैश्च विवक्षितस्य सदसत्त्वमिति, अतएवाभिहितमाचाराटीकायाम् 'इह चोत्पत्तिमङ्गीकृत्योत्तरविकल्पत्रय न सम्भवति, पदार्थावयवापेक्षत्वात् तस्योत्पत्तेश्चावयवाभावात्' इति, एवमज्ञानिकाना सप्तषष्टिर्भवति इति । वैनयिकाना च द्वात्रिंशत् सा चैवम् वसया–सुरनृपतियतिज्ञातिस्थविराधममातृपितृणा प्रत्येक कायेन वाचा मनसा दानेन च देशकालोपपन्नेन विनय कार्य इत्येते चत्वारो भेदा सुरादिष्वष्टसु स्थानेषु भवन्ति ते चैकत्र मीलिता द्वात्रिंशादिति, सर्वसख्या पुनरेतेषा त्रीणि शतानि त्रिषष्ट्यधिकानीति ।

शेषमनभिगृहीतम् ॥ यथोक्ताया विरतेर्विपरीताऽविरतिः[1] ॥ प्रमादः स्मृत्यनवस्थानं कुशलेष्वनादरो योगदुष्प्रणिधानं चैष प्रमादः ॥ कषाया मोहनीये वक्ष्यन्ते योगस्त्रिविधः पूर्वोक्तः[2] ॥ एषां मिथ्यादर्शनादीनां बन्धहेतूनां पूर्वस्मिन्पूर्वस्मिन्सति नियतमुत्तरेषां भावः। उत्तरोत्तरभावे तु पूर्वेषामनियम इति ॥ १ ॥

सकषायत्वाज्जीवः कर्मणो योग्यान्पुद्गलानादत्ते ॥ २ ॥

सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलान् आदत्ते । कर्मयोग्यानिति अष्टविधे पुद्गलग्रहणकर्मशरीरग्रहणयोग्यानि । नामप्रत्ययाः[3] सर्वतो योगविशेषादिति वक्ष्यते ॥ २ ॥

स बन्धः ॥ ३ ॥

स एष कर्मशरीरपुद्गलग्रहणकृतो बन्धो भवति ॥ ३ ॥

स पुनश्चतुर्विधः ।

प्रकृतिस्थित्यनुभावप्रदेशास्तद्विधयः[4] ॥ ४ ॥

प्रकृतिबन्धः स्थितिबन्धः अनुभावबन्धः प्रदेशबन्धः इति॥४॥

तत्र—

---

१ अ ८ सू १०

२ अ ६ सू १

३ अ ८ सू २५

४ बन्धः—जीवस्य कर्मपुद्गलसंश्लेषः स चतुर्धा १ स्थित्यनुभावप्रदेशानां समुदायः स प्रकृतिबन्धः २ अध्यवसायविशेषगृहीतस्य कर्मदलिकस्य यत् स्थितिकालनियमनं स स्थितिबन्धः ३ कर्मपुद्गलानामेव शुभोऽशुभो वा घात्यघाती वा यो रसः सोऽनुभावबन्धो रसबन्ध इत्यर्थः ४ कर्मपुद्गलानामेव यद्ग्रहणं स्थितिरसनिरपेक्षं दलिकसंख्याप्राधान्येनैव करोति स प्रदेशबन्धः उक्तं च—

‘प्रकृतिः समुदायः स्यात् स्थितिः कालावधारणम् ।
अनुभावो रसः प्रोक्तः प्रदेशो दलसञ्चयः ॥१॥’ इति ।



नानावरणीयकर्म—आवरणमित्यस्यार्थ—तिरस्करिणी। यथा वस्त्रे-णावृताया मूर्तेराकारादिकं न दृश्यते तथा आत्मनि विद्यमाना सर्वापि केवलज्ञानोत्पादनशक्तिरनेन कर्मणा तिरस्करिणीस्वरूपेण समाच्छाद्यते।

पृ. १५३

आद्यो ज्ञानदर्शनावरणवेदनीयमोहनीयायुष्कनामगोत्रा-न्तराया ॥ ५ ॥

आद्य इति सूत्रक्रमप्रामाण्यात्प्रकृतिबन्धमाह । सोऽष्टविध. । तद्यथा । ज्ञानावरण दर्शनावरण वेदनीय मोहनीय आयुष्क नाम गोत्र अन्तरायमिति ॥५॥

किं चान्यत्—

पञ्चनवद्व्यष्टाविंशतिचतुर्द्विचत्वारिंशद्द्विपञ्चभेदा यथाक्रमम् ॥ ६ ॥

स एष प्रकृतिबन्धोऽष्टविधोऽपि पुनरेकश' पञ्चभेद नवभेदः द्विभेद' अष्टाविंशतिभेद. चतुर्भेद' द्विचत्वारिंशद्भेदः द्विभेद [illegible] इति यथाक्रम प्रत्येतव्यम् ॥ ६ ॥

इत उत्तर यद्वक्ष्याम । तद्यथा—

मत्यादीनाम् ॥ ७ ॥

ज्ञानावरण पञ्चविध भवति । मत्यादीना ज्ञान[illegible] पञ्च विकल्पांश्चैकश इति ॥ ७ ॥

---

१ (१) अष्टाविंशतिभेदभिन्न मतिज्ञान येनाव्रियते [illegible] लोचनपटवत् । (२) श्रोत्रोपलब्धिरूपश्रुतज्ञान येनाव्रियते तत् [illegible] घाति भवति (३) इन्द्रियानिन्द्रियनिरपेक्षत्वे सति आत्मनो [illegible] द्रव्यविषयकप्रकाशाविर्भावरूप अवधिज्ञान येनाव्रियते तद [illegible] (४) साक्षादात्मनो मनोद्रव्यपर्यायान् निमित्तीकृत्य [illegible] मनोग्राहिप्रकाशविशेषरूप मन पर्यायज्ञान येनाव्रियत [illegible] देशघाति । (५) केवलज्ञानावरणक्षयसमुद्भूतमा[illegible] तत्केवलज्ञानावरणम्, तच्च सर्वघाति भवति ।

चक्षुरचक्षुरवधिकेवलाना निद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानगृद्धिवेदनीयानि च ॥ ८ ॥

१ चक्षुर्दर्शनावरण २ अचक्षुर्दर्शनावरण ३ अवधिदर्शनावरण ४ केवलदर्शनावरण ५ निद्रावेदनीय ६ निद्रानिद्रावेदनीय ७ प्रचलावेदनीय ८ प्रचलाप्रचलावेदनीय ९ स्त्यानगृद्धिवेदनीयमिति दर्शनावरण नवभेद भवति ॥ ८ ॥

सदसद्वेद्ये ॥ ९ ॥

सद्वेद्य असद्वेद्य च वेदनीय द्विभेद भवति ॥ ९ ॥

दर्शनचारित्रमोहनीयकषायनोकषायवेदनीयाख्यास्त्रिद्विषोडशनवभेदा सम्यक्त्वमिथ्यात्वतदुभयानि कषायनोकषायावनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनविकल्पाश्चैकश क्रोधमानमायालोभाः हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुनपुसकवेदा ॥ १० ॥

---

(१) यन्नत्वनेनात्मनि चक्षु सर्वमर्वेन्द्रियमात्मन सामान्यविशेषबोधस्वभावस्य करण तद्वारक यत्सामान्यमात्रोपलम्भनमात्मपरिणतिरूप चक्षुर्दर्शनम्, तद्घाति चक्षुर्दर्शनावरणम् तच्च देशघाति भवति । (२) शेषेन्द्रियमनोविषयकमविशिष्टमचक्षुर्दर्शनम्, तद्घाति कर्म अचक्षुर्दर्शनावरणम् । तच्च वैविसम भवति । (३।४) अवधिदर्शनावरणक्षयोपशमसमुद्भूतमवधिदर्शनम् । साक्षादात्मन सामान्यमात्रोपलम्भ केवलदर्शनावरणक्षयसमुद्भूत केवलदर्शनम् । तयोरावारक कर्म अवधिदर्शनावरणम् केवलदर्शनावरण च भवति । (५) सुखप्रबोधस्वभावावस्थाविशेषरूपत्व, सुखजागरणस्वभावस्वापावस्थाविशेषरूपत्व वा निद्राया लक्षणम् । (६) दु खजागरणस्वभावस्वापावस्थाविशेषरूपत्व, दु खप्रतिबोधस्वापावस्थाविशेषरूपत्व वा निद्रानिद्राया लक्षणम् (७) स्थितोपस्थितस्वापावस्थाविशेषरूपत्व प्रचलाया लक्षणम् । (८) चङ्क्रमणविषयकस्वापावस्थाविशेषरूपत्व प्रचलाप्रचलाया लक्षणम् । (९) दिनचिन्तितार्थातिकाङ्क्षाविषयकस्वापावस्थाविशेषरूपत्व, जाग्रदवस्थाध्यवसितार्थससाधनविषयकाभिकाङ्क्षानिमित्तकस्वापावस्थाविशेषरूपत्व वा स्त्यानर्द्धेर्लक्षणम् ॥ अत्र निद्रादयस्तु समधिगताया दर्शनलब्धेरुपघाते प्रवर्तन्ते ॥ चक्षुर्दर्शनावरणादिचतुष्टय तु दर्शनोद्गमोच्छेदित्वात् मूलघात निर्वहन्ति ।

निर्द्विषोडशनवभेदा यथाक्रमम् । मोहनीयबन्धो द्विविधो दर्शनमोहनीयाख्यश्चारित्रमोहनीयाख्यश्च । तत्र दर्शनमोहनीयाख्यस्त्रिभेदः । तद्यथा । मिथ्यात्ववेदनीय सम्यक्त्ववेदनीय सम्यग्मिथ्यात्ववेदनीयमिति । चारित्रमोहनीयाख्यो द्विभेद कषायवेदनीय नो कषायवेदनीय चेति। तत्र कषायवेदनीयाख्य षोडशभेद । तद्यथा। अनन्तानुबन्धी क्रोधो मानो माया लोभ एवमप्रत्याख्यानकषाय प्रत्याख्यानावरणकषाय सज्वलनकषाय इत्येकश क्रोधमानमाया लोभा षोडश भेदा ॥ नोकषायवेदनीय नवभेदम् । तद्यथा । हास्य रति अरति. शोक भय जुगुप्सा पुरुषवेद स्त्रीवेद नपुसकवेद इति नोकषायवेदनीय नवप्रकारम् । तत्र पुरुषवेदादीना तृणकाष्ठकरीषाग्नयो निदर्शनानि भवन्ति। इत्येव मोहनीयमष्टाविंशतिभेद भवति ॥

अनन्तानुबन्धी सम्यग्दर्शनोपघाती । तस्योदयाद्धि सम्यग्दर्शन नोत्पद्यते । पूर्वोत्पन्नमपि च प्रतिपतति । अप्रत्याख्यानकषायोदयाद्विरतिर्न भवति । प्रत्याख्यानावरणकषायोदयाद्विरताविरतिर्भवत्युत्तमचारित्रलाभस्तु न भवति । संज्वलनकषायोदयाद्यथाख्यातचारित्रलाभो न भवति ॥

क्रोध कोपो रोषो द्वेषो भण्डन भाम इत्यनर्थान्तरम् । तस्यास्य क्रोधस्य तीव्रमध्यविमध्यमन्दभावाश्रितानि निदर्शनानि भवन्ति। तद्यथा । पर्वतराजिसदृश भूमिराजिसदृश वालुकाराजिसदृश उदकराजिसदृश इति । तत्र पर्वतराजिसदृशो नाम । यथा प्रयोगविस्रसामिश्रकाणामन्यतमेन हेतुना पर्वतराजिरुत्पन्ना नैव कदाचिदपि सरोहति एवमिष्टवियोजनानिष्टयोजनाभिलषितालाभादीनामन्यतमेन हेतुना यस्योत्पन्न क्रोध आमरणान्न व्यय गच्छति जात्यन्तरानुबन्धी निरनुनयस्तीव्रानुशयोऽप्रत्यवमर्शश्च भवति स पर्वतराजिसदृश । तादृश क्रोधमनुसृता नरकेषूपपत्तिं प्राप्नुवन्ति ॥ भूमिराजिसदृशो

नाम । यथा भूमेर्भास्कररश्मिजालात्तस्नेहाया वाय्वभिहताया र
रुत्पन्ना वर्षापेक्षसंरोहा परमप्रकृष्टाष्टमासस्थितिर्भवति एव यथ
निमित्तो यस्य क्रोधोऽनेकविधस्थानीयो दुरनुनयो भवति स
राजिसदृशः । तादृश क्रोधमनुमृतास्तिर्यग्योनावुपपत्तिं प्राप्नुवन्
वालुकाराजिसदृशो नाम । यथा वालुकाया काष्ठशलाकाशर्करा
मन्यतमेन हेतुना राजिरुत्पन्ना वाय्वीरणाद्यपेक्षसरोहार्वाग्मा
रोहति एव यथोक्तनिमित्तोत्पन्नो यस्य क्रोधोऽहोरात्रं पक्ष
चातुर्मास्य सवत्सर वावतिष्ठते स वालुकाराजिसदृशो नाम क्रो
तादृशं क्रोधमनुमृता मनुष्येषूपपत्तिं प्राप्नुवन्ति ॥ उदकराजिर
नाम । यथोदके दण्डशलाकाङ्गुल्यादीनामन्यतमेन हेतुना राजि
न्ना द्रवत्वादपाम्रुत्पत्त्यनन्तरमेव सरोहति एव यथोक्तनिमित्तो
क्रोधो विदुषोऽप्रमत्तस्य प्रत्यवमर्शेनोत्पत्त्यनन्तरमेव व्यपगच्छ
उदकराजिसदृश । तादृशं क्रोधमनुमृता देवेषूपपत्तिं प्राप्नुव
येषा त्वेष चतुर्विधोऽपि न भवति ते निर्वाणं प्राप्नुवन्ति ।




आयु कर्म—अस्य कर्मण स्वभावो बन्धनयन्त्रमिवास्ते। यथा स्तेनेन बन्धनयन्त्रबद्ध स्वपादो बहिर्निष्कासयितु मोचयितु वा न शक्यते तद्वत् यस्मिन् कस्मिन्नपि शरीरे बद्ध आत्मा यावदायु कर्म समाप्ति तस्माच्छरीराद्बहिर्निर्गन्तु न शक्नोति। पृ १५७




नामकर्म—यथा कश्चिदालेख्यकृत विविधान्यालेख्यानि निर्मिमाते तथैव नामकर्म आत्मार्थ मनुष्यतिर्यगादीनि सपूर्णावयवानि शरीराणि निर्माति। पृ १५७

र्थान्तरम् । तस्यास्य लोभस्य तीव्रादिभावाश्रितानि निदर्शनानि भवन्ति । तद्यथा लाक्षारागसदृश कर्दमरागसदृश कुसुम्भरागसदृशो हरिद्रारागसदृश इति। अत्राप्युपसहारनिगमने क्रोधनिदर्शनैर्व्याख्याते।

एषा क्रोधादीना चतुर्णा कषायाणा प्रत्यनीकभूता प्रतिघातहेतवो भवन्ति । तद्यथा । क्षमा क्रोधस्य मार्दव मानस्यार्जव मायाया संतोषो लोभस्येति ॥ १० ॥

नारकतैर्यग्योनमानुषदैवानि ॥ ११ ॥

आयुष्क चतुर्भेद नारक तैर्यग्योन मानुष दैवमिति ॥ ११ ॥

गतिजातिशरीराङ्गोपाङ्गनिर्माणबन्धनसङ्घातसंस्थानसंहननस्पर्शरसगन्धवर्णानुपूर्व्यगुरुलघूपघातपराघातातपोद्योतोच्छ्वासविहायोगतयः प्रत्येकशरीरत्रससुभगसुस्वरशुभसूक्ष्मपर्याप्तस्थिरादेययशांसि सेतराणि तीर्थकृत्त्वं च ॥१२॥

गतिनाम जातिनाम शरीरनाम अङ्गोपाङ्गनाम निर्माणनाम बन्धननाम सघातनाम सस्थाननाम सहनननाम स्पर्शनाम रसनाम गन्धनाम वर्णनाम आनुपूर्वीनाम अगुरुलघुनाम उपघातनाम पराघातनाम आतपनाम उद्योतनाम उच्छ्वासनाम विहायोगतिनाम । प्रत्येकशरीरादीना सेतराणा नामानि । तद्यथा । प्रत्येकशरीरनाम साधारणशरीरनाम त्रसनाम स्थावरनाम सुभगनाम दुर्भगनाम सुस्वरनाम दुःस्वरनाम शुभनाम अशुभनाम सूक्ष्मनाम बादरनाम पर्याप्तनाम अपर्याप्तनाम स्थिरनाम अस्थिरनाम आदेयनाम अनादेयनाम यशोनाम अयशोनाम तीर्थनाम तीर्थकरनाम इत्येतद्विचत्वारिंशद्विध मूलभेदतो नामकर्म भवति । उत्तरनामानेकविधम् । तद्यथा । गतिनाम चतुर्विध नरकगतिनाम तिर्यग्योनिगतिनाम मनुष्यगतिनाम देवगतिनामेति ॥ जातिनाम्नो मूलभेदाः पञ्च ।

तद्यथा। एकेन्द्रियजातिनाम द्वीन्द्रियजातिनाम त्रीन्द्रियजातिनाम चतुरिन्द्रियजातिनाम पञ्चेन्द्रियजातिनामेति ॥ एकेन्द्रियजातिनामानेकविधम्। तद्यथा। पृथिवीकायिकजातिनाम अप्कायिकजातिनाम तेजःकायिकजातिनाम वायुकायिकजातिनाम वनस्पतिकायिकजातिनामेति ॥ तत्र पृथिवीकायिकजातिनामानेकविधम्। तद्यथा। शुद्धपृथिवी-शर्करावालुकोपल-शिलालवणायस्त्रपु-ताम्र-सीसक-रूप्य-सुवर्ण-वज्र-हरिताल-हिङ्गुलक-मनःशिला-सस्यकाञ्जनप्रवाल-काभ्रपटलाभ्रवालिका जातिनामादि गोमेदक-रुचकाङ्क-स्फटिकलोहिताक्ष-जलावभास-वैडूर्य-चन्द्रप्रभ-चन्द्रकान्त-सूर्यकान्त-जलकान्त-मसारगल्लाश्मगर्भ-सौगन्धिक-पुलकारिष्ट-काञ्चनमणिजातिनामादि च ॥ अप्कायिकजातिनामानेकविधम्। तद्यथा। उपक्लेदावश्याय नीहार हिम घनोदक शुद्धोदकजातिनामादि ॥ तेजःकायिकजातिनामानेकविधम्। तद्यथा। अङ्गार-ज्वाला-लातार्चिर्मुर्मुर-शुद्धाग्निजातिनामादि ॥ वायुकायिकजातिनामानेकविधम्। तद्यथा। उत्कलिका-मण्डलिका-झञ्झकायन-सवर्तकजातिनामादि ॥ वनस्पतिकायिकजातिनामानेकविधम्। तद्यथा। कन्द-मूल-स्कन्ध-त्वक्-काष्ठपत्र-प्रवाल-पुष्प-फल-गुल्म-गुच्छ-लता-वल्ली-तृण-पर्वकायशेवाल-पनक-वलक-कुहनजातिनामादि ॥ एवं द्वीन्द्रियजातिनामानेकविधम्। एवं त्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियजातिनामादीन्यपि ॥

शरीरनाम पञ्चविधम्। तद्यथा। औदारिकशरीरनाम वैक्रियशरीरनाम आहारकशरीरनाम तैजसशरीरनाम कार्मणशरीरनामेति ॥ अङ्गोपाङ्गनाम त्रिविधम्। तद्यथा। औदारिकाङ्गोपाङ्गनाम वैक्रियशरीराङ्गोपाङ्गनाम आहारकशरीराङ्गोपाङ्गनाम। पुनरेकैकमनेकविधम्। तद्यथा। अङ्गनाम तावत् शिरोनाम उरोनाम पृष्ठनाम बाहुनाम उदरनाम पादनाम ॥ उपाङ्गनामानेकविधम्। तद्यथा।

स्पर्शनाम रसनाम घ्राणनाम चक्षुर्नाम श्रोत्रनाम । तथा मस्तिष्ककपालकृकाटिकाशङ्खललाटतालुकपोलहनुचिबुकदशनौष्ठभ्रूनयनकर्णनासाद्युपाङ्गनामानि शिरसः । एवं सर्वेषामङ्गानामुपाङ्गाना नामानि ॥ जातिलिङ्गाकृतिव्यवस्थानियामकं निर्माणनाम ॥ सत्यां प्राप्तौ निर्मितानामपि शरीराणां बन्धकं बन्धननाम । अन्यथा हि वालुकापुरुषवदबद्धानि शरीराणि स्युरिति ॥ बद्धानामपि च सघातविशेषजनकं प्रचयविशेषात्सघातनाम दारुमृत्पिण्डायःसघातवत् ॥ सस्थाननाम षड्विधम् । तद्यथा । समचतुरस्रनाम न्यग्रोधपरिमण्डलनाम साचिनाम कुब्जनाम वामननाम हुण्डनामेति ॥ सहनननाम षड्विधम् । तद्यथा । वज्रर्षभनाराचनाम अर्धवज्रर्षभनाराचनाम नाराचनाम अर्धनाराचनाम कीलिकानाम सृपाटिकानामेति ॥ स्पर्शनामाष्टविध कठिननामादि ॥ रसनामानेकविध तिक्तनामादि ॥ गन्धनामानेकविध सुरभिगन्धनामादि ॥ वर्णनामानेकविध कालकनामादि ॥ गतावुत्पत्तुकामस्यान्तर्गतौ वर्तमानस्य तदभिमुखमानुपूर्व्या तत्प्रापणसमर्थमानुपूर्वीनामेति । निर्माणनिर्मितानां शरीराङ्गोपाङ्गाना विनिवेशक्रमनियामकमानुपूर्वीनामेत्यपरे ॥ अगुरुलघुपरिणामनियामकमगुरुलघुनाम ॥ शरीराङ्गोपाङ्गोपघातकमुपघातनाम स्वपराक्रमविजयाद्युपघातजनकं वा ॥ परत्रासप्रतिघातादिजनकं पराघात नाम ॥ आतपसामर्थ्यजनकमातपनाम ॥ प्रकाशसामर्थ्यजनकमुद्योतनाम ॥ प्राणपुद्गलग्रहणसामर्थ्यजनकमुच्छ्वासनाम ॥ लब्धिशिक्षर्द्धिप्रत्ययस्याकाशगमनस्य जनकं विहायोगतिनाम ॥

पृथक्शरीरनिर्वर्तकं प्रत्येकशरीरनाम । अनेकजीवसाधारणशरीरनिर्वर्तकं साधारणशरीरनाम । त्रसभावनिर्वर्तकं त्रसनाम । स्थावरभावनिर्वर्तकं स्थावरनाम । सौभाग्यनिर्वर्तकं सुभगनाम । दौर्भाग्यनिर्वर्तकं दुर्भगनाम । सौस्वर्यनिर्वर्तकं सुस्वरनाम ।

दौस्वर्यनिर्वर्तक दु स्वरनाम । शुभभावशोभामाङ्गल्यनिर्वर्तक शुभनाम । तद्विपरीतनिर्वर्तकमशुभनाम । सूक्ष्मशरीरनिर्वर्तक सूक्ष्मनाम । बादरशरीरनिर्वर्तक बादरनाम ॥ पर्याप्ति पञ्चविधा । तद्यथा । आहारपर्याप्ति शरीरपर्याप्ति इन्द्रियपर्याप्ति प्राणापानपर्याप्ति भाषापर्याप्तिरिति । पर्याप्ति क्रियापरिसमाप्तिरात्मन । शरीरेन्द्रियवाङ्मन'प्राणापानयोग्यदलिकद्रव्याहरणक्रियापरिसमाप्तिराहारपर्याप्ति. । गृहीतस्य शरीरतया सस्थापनक्रियापरिसमाप्ति' शरीरपर्याप्ति । सस्थापन रचना घटनमित्यर्थ. । त्वगादीन्द्रियनिर्वर्तनक्रियापरिसमाप्तिरिन्द्रियपर्याप्ति' । प्राणापानक्रियायोग्यद्रव्यग्रहणनिसर्गशक्तिनिर्वर्तनक्रियापरिसमाप्ति. प्राणापानपर्याप्ति' । भाषायोग्यद्रव्यग्रहणनिसर्गशक्तिनिर्वर्तनक्रियापरिसमाप्तिर्भाषापर्याप्ति' । मनस्त्वयोग्यद्रव्यग्रहणनिसर्गशक्तिनिर्वर्तनक्रियासमाप्तिर्मन.पर्याप्तिरित्येके । आसा युगपदारब्धानामपि क्रमेण समाप्तिरुत्तरोत्तरसूक्ष्मत्वात् सूत्रदार्वादिकर्तनघटनवत् । यथासङ्ख्य च निदर्शनानि गृहदलिकग्रहणस्तम्भस्थूणाद्वारप्रवेशनिर्गमस्थानशयनादिक्रियानिर्वर्तनानीति । पर्याप्तिनिर्वर्तक पर्याप्तिनाम अपर्याप्तिनिर्वर्तकमपर्याप्तिनाम । अपर्याप्तिनाम तत्परिणामयोग्यदलिकद्रव्यमात्मना नोपात्तमित्यर्थ ॥ स्थिरत्वनिर्वर्तक स्थिरनाम । विपरीतमस्थिरनाम । आदेयभावनिर्वर्तकमादेयनाम । विपरीतमनादेयनाम । यशोनिर्वर्तक यशोनाम । विपरीतमयशोनाम । तीर्थकरत्वनिर्वर्तक तीर्थकरनाम । तास्तान्भावान्नामयतीति नाम । एव सोत्तरभेदो नामकर्मभेदोऽनेकविध प्रत्येतव्य' ॥ १२ ॥

उच्चैर्नीचैश्च ॥ १३ ॥

उच्चैर्गोत्र नीचैर्गोत्र च । तत्रोच्चैर्गोत्र देशजातिकुलस्थानमानसत्कारैश्वर्याद्युत्कर्षनिर्वर्तकम् । विपरीत नीचैर्गोत्र चण्डालमुष्टिकव्याधमत्स्यबन्धदास्यादिनिर्वर्तकम् ॥ १३ ॥




गोत्रकर्म—यथा कुम्भकारो विविधान् लघून् बृहतो वा घटान् निर्मिमीते तथा गोत्रकर्म विविधामुच्चनीचयोनिमुत्पादयति। पृ. १६०



अन्तरायकर्म—राजाज्ञाया सत्यामपि यथा कोशाध्यक्षो दानं न दापयति किंतु तत्र विघ्नमुत्पादयति तथैव कर्म दानलाभभोगोपभोगेषु विघ्नं करोति। पृ १६१

दानादीनाम् ॥ १४ ॥

अन्तराय' पञ्चविध' । तद्यथा । दानस्यान्तराय, लाभस्यान्तराय भोगस्यान्तराय, उपभोगस्यान्तरायःवीर्यान्तराय इति॥१४॥

उक्त प्रकृतिबन्ध । स्थितिबन्ध वक्ष्याम' ।

आदितस्तिसृणामन्तरायस्य च त्रिंशत्सागरोपमकोटीकोट्य परा स्थिति' ॥ १५ ॥

आदितस्तिसृणा कर्मप्रकृतीना ज्ञानवरणदर्शनावरणवेद्याना-मन्तरायप्रकृतेश्च त्रिंशत्सागरोपमकोटीकोट्य परा स्थिति ॥ १५ ॥

सप्ततिर्मोहनीयस्य ॥ १६ ॥

मोहनीयकर्मप्रकृते सप्तति सागरोपमकोटीकोट्य' परा स्थितिः ॥ १६ ॥

नामगोत्रयोर्विंशति ॥ १७ ॥

नामगोत्रप्रकृत्योर्विंशति सागरोपमकोटीकोट्य परा स्थिति ॥१७॥

त्रयस्त्रिंशत्सागरोपमाण्यायुष्कस्य ॥ १८ ॥

आयुष्कप्रकृतेस्त्रयस्त्रिंशत्सागरोपमानि परा स्थिति ॥ १८ ॥

अपरा द्वादश मुहूर्ता वेदनीयस्य ॥ १९ ॥

वेदनीयप्रकृतेरपरा द्वादश मुहूर्ता स्थितिरिति ॥ १९ ॥

नामगोत्रयोरष्टौ ॥ २० ॥

नामगोत्रप्रकृत्योरष्टौ मुहूर्ता अपरा स्थितिर्भवति ॥ २० ॥

शेषाणामन्तर्मुहूर्तम् ॥ २१ ॥

वेदनीयनामगोत्रप्रकृतिभ्य शेषाणा ज्ञानावरणदर्शनावरण मोहनीयायुष्कान्तरायप्रकृतीनामपरा स्थितिरन्तर्मुहूर्तं भवति ॥ २१ ॥

उक्तः स्थितिबन्ध । अनुभावबन्ध वक्ष्यामः ।

विपाकोऽनुभाव ॥ २२ ॥

सर्वासां प्रकृतीनां फल विपाकोदयोऽनुभावो भवति । विविधः पाको विपाक. स तथा चान्यथा चेत्यर्थः । जीव कर्मविपाकमनुभवन् कर्मप्रत्ययमेवानाभोगवीर्यपूर्वक कर्मसक्रम करोति उत्तरप्रकृतिषु सर्वासु मूलप्रकृत्यभिन्नासु न तु मूलप्रकृतिषु सक्रमो विद्यते बन्धविपाकनिमित्तान्यजातीयकत्वात् । उत्तर प्रकृतिषु च दर्शनचारित्रमोहनीययो. सम्यग्मिथ्यात्ववेदनीयस्यायुष्कस्य च जात्यन्तरानुबन्धविपाकनिमित्तान्यजातीयकत्वादेव सक्रमो न विद्यते । अपवर्तन तु सर्वासा प्रकृतीना विद्यते । तदायुष्केण व्याख्यातम् ॥ २२ ॥

स यथानाम ॥ २३ ॥

सोऽनुभावो गतिनामादीना यथानाम विपच्यते ॥ २३ ॥

ततश्च निर्जरा ॥ २४ ॥

ततश्चानुभावात्कर्मनिर्जरा भवतीति निर्जरा क्षयो वेदनेत्येकार्थम्।अत्र चशब्दो हेत्वन्तरमपेक्षते तपसा निर्जरा चेति वक्ष्यते॥२४॥

उक्तोऽनुभावबन्ध । प्रदेशबन्ध वक्ष्याम ।

नामप्रत्यया सर्वतो योगविशेषात्सूक्ष्मैकक्षेत्रावगाढस्थिता सर्वात्मप्रदेशेष्वनन्तानन्तप्रदेशा ॥ २५ ॥

नामप्रत्ययाः पुद्गला बध्यन्ते । नाम प्रत्यय एषा त इमे नामप्रत्यया । नामनिमित्ता नामहेतुका नामकारणा इत्यर्थः । सर्वतस्तिर्यगूर्ध्वमधश्च बध्यन्ते । योगविशेषात् कायवाङ्मनःकर्मयोगविशेषाच्च बध्यन्ते । सूक्ष्मा बध्यन्ते न बादरा । एकक्षेत्रावगाढा बध्यन्ते न क्षेत्रान्तरावगाढा[१] । स्थिताश्च बध्यन्ते न गतिसमापन्ना[२] ।

१ अ २ सू ५२
२ अ ९ सू ३

सर्वात्मप्रदेशेषु सर्वप्रकृतिपुद्गला, सर्वात्मप्रदेशेषु बध्यन्ते । एकैको ह्यात्मप्रदेशोऽनन्तैः कर्मप्रदेशैर्बद्धः । अनन्तानन्तप्रदेशा कर्मग्रहणयोग्या, पुद्गला बध्यन्ते न सङ्ख्येयासङ्ख्येयानन्तप्रदेशाः । कुतोऽग्रहण योग्यत्वात्प्रदेशानामिति एष प्रदेशबन्धो भवति ॥ २५ ॥

सर्वं चैतदष्टविधं कर्म पुण्यं पापं च ।

तत्र—

सद्वेद्यसम्यक्त्वहास्यरतिपुरुषवेदशुभायुर्नामगोत्राणि पुण्यम् ॥ २६ ॥

सद्वेद्यं भूतव्रत्यनुकम्पादिहेतुकम् सम्यक्त्ववेदनीयं केवलिश्रुतादीनां वर्णवादादिहेतुकम् हास्यवेदनीयं रतिवेदनीयं पुरुषवेदनीयं शुभमायुष्कं मानुषं दैवं च शुभनाम गतिनामादीनां शुभं गोत्रमुच्चैर्गोत्रमित्यर्थः । इत्येतदष्टविधं कर्म पुण्यम्, अतोऽन्यत्पापम् ॥२६॥

इति तत्त्वार्थाधिगमसूत्रेषु अर्हत्प्रवचनसङ्ग्रहेऽष्टमोऽध्यायः समाप्तः ॥८॥

———

# अथ नवमोऽध्यायः ।

उक्तो बन्धः । संवरं वक्ष्यामः

आस्रवनिरोधः संवरः ॥ १ ॥

यथोक्तस्य काययोगादेर्द्विचत्वारिंशद्विधस्यास्रवस्य निरोधः संवरः[1] ॥ १ ॥

स गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रैः ॥ २ ॥

स एष संवर एभिर्गुप्त्यादिभिरभ्युपायैर्भवति ॥ २ ॥

किं चान्यत्—

तपसा निर्जरा च ॥ ३ ॥

तपो द्वादशविधं वक्ष्यते । तेन संवरो भवति निर्जरा च ।३।

अत्राह । उक्तं भवता गुप्त्यादिभिरभ्युपायैः संवरो भवतीति । तत्र के गुप्त्यादय इति । अत्रोच्यते—

सम्यग्योगनिग्रहो गुप्तिः ॥ ४ ॥

सम्यगिति विधानतो ज्ञात्वाभ्युपेत्य सम्यग्दर्शनपूर्वकं त्रिविधस्य योगस्य निग्रहो गुप्तिः कायगुप्तिर्वाग्गुप्तिर्मनोगुप्तिरिति । तत्र शयनासनादाननिक्षेपस्थानचङ्क्रमणेषु कायचेष्टानियमः कायगुप्तिः । याचनपृच्छनपृष्टव्याकरणेषु वाङ्नियमो मौनमेव वा वाग्गुप्तिः । सावद्यसंकल्पनिरोधः कुशलसंकल्पः कुशलाकुशलसंकल्पनिरोध एव वा मनोगुप्तिरिति ॥ ४ ॥

ईर्याभाषैषणादाननिक्षेपोत्सर्गाः समितयः ॥ ५ ॥

सम्यगीर्या सम्यग्भाषा सम्यगेषणा सम्यगादाननिक्षेपौ स

१ अ ९ सू १९, २०

म्युत्सर्ग इति पञ्च समितय । तत्रावश्यकार्यैव संयमार्थं सर्वतो युगमात्रनिरीक्षणायुक्तस्य शनैर्न्यस्तपदा गतिरीर्यासमिति । हितमितासंदिग्धानवद्यार्थनियतभाषणं भाषासमिति । अन्नपानरजोहरणपात्रचीवरादीनां धर्मसाधनानामाश्रयस्य चोद्गमोत्पादनैषणादोषवर्जनमेषणासमिति । रजोहरणपात्रचीवरादीनां पीठफलकादीनां चावश्यकार्थं निरीक्ष्य प्रमृज्य चादाननिक्षेपौ आदाननिक्षेपणासमिति. । स्थण्डिले स्थावरजङ्गमजन्तुवर्जिते निरीक्ष्य प्रमृज्य च मूत्रपुरीषादीनामुत्सर्ग उत्सर्गसमितिरिति ॥ ५ ॥

उत्तम क्षमामार्दवार्जवशौचसत्यसंयमतपस्त्यागाकिंचन्यब्रह्मचर्याणि धर्म ॥ ६ ॥

इत्येष दशविधोऽनगारधर्म' उत्तमगुणप्रकर्षयुक्तो भवति । तत्र क्षमा तितिक्षा सहिष्णुत्वं क्रोधनिग्रह इत्यनर्थान्तरम् । तत्कथं क्षमितव्यमिति चेदुच्यते । क्रोधनिमित्तस्यात्मनि भावाभावचिन्तनात् परे प्रयुक्तस्य क्रोधनिमित्तस्यात्मनि भावचिन्तनादभावचिन्तनाद्वा क्षमितव्यम् । भावचिन्तनात् तावद्विद्यन्ते मय्येते दोषाः किमत्रासौ मिथ्या ब्रवीति क्षमितव्यम् । अभावचिन्तनादपि क्षमितव्यं नैते विद्यन्ते मयि दोषा यान् अज्ञानादसौ ब्रवीति क्षमितव्यम् । किं चान्यत् । क्रोधदोषचिन्तनाच्च क्षमितव्यम् । क्रुद्धस्य हि विद्वेषासादनस्मृतिभ्रंशव्रतलोपादयो दोषा भवन्तीति । किं चान्यत् । बालस्वभावचिन्तनाच्च परोक्षप्रत्यक्षाक्रोशताडनमारणधर्मभ्रंशानामुत्तरोत्तररक्षार्थम् । बाल इति मूढमाह । परोक्षमाक्रोशति बाले क्षमितव्यमेव । एवंस्वभावा हि बाला भवन्ति । दिष्ट्या च मां परोक्षमाक्रोशति न प्रत्यक्षमिति । लाभ एव मन्तव्य इति । प्रत्यक्षमप्याक्रोशति बाले क्षमितव्यम् । विद्यत एवैतद्बालेषु । दिष्ट्या च मां प्रत्यक्षमाक्रोशति न ताडयति । एतदप्यस्ति बालेष्विति लाभ एव मन्तव्य. ताडयत्यपि

वाले क्षमितव्यम् । एवस्वभावा हि वाला भवन्ति । दिष्ट्या च मा ताडयति न प्राणैर्वियोजयतीति । एतदपि विद्यते वालेष्विति । प्राणैर्वियोजयत्यपि वाले क्षमितव्यम् । दिष्ट्या च मा प्राणैर्वियोजयति न धर्माद्भ्रंशयतीति क्षमितव्यम् । एतदपि विद्यते वालेष्विति लाभ एव मन्तव्य ॥ किं चान्यत् । स्वकृतकर्मफलाभ्यागमाच्च । स्वकृतकर्मफलाभ्यागमोऽयं मम, निमित्तमात्रं पर इति क्षमितव्यम । किं चान्यत् । क्षमागुणांश्चानायासादीननुस्मृत्य क्षमितव्यमेवेति क्षमाधर्म ॥

नीचैर्वृत्त्यनुत्सेको मार्दवलक्षणम् । मृदुभाव, मृदुकर्म च मार्दव मदनिग्रहो मानविघातश्चेत्यर्थ । तत्र मानस्येमान्यष्टौ स्थानानि भवन्ति । तद्यथा । जाति' कुल रूपमैश्वर्यं विज्ञान श्रुत लाभो वीर्यमिति । एभिर्जात्यादिभिरष्टाभिर्मदस्थानैर्मत्त' परात्मनिन्दाप्रशंसाभिरतस्तीव्राहंकारोपहतमतिरिहामुत्र चाशुभफलमकुशल कर्मोपचिनोत्युपदिश्यमानमपि च श्रेयो न प्रतिपद्यते । तस्मादेषां मदस्थानानां निग्रहो मार्दव धर्म इति ॥

भावविशुद्धिरविसंवादन चार्जवलक्षणम् । ऋजुभाव ऋजुकर्म वार्जव भावदोषवर्जनमित्यर्थ । भावदोषयुक्तो ह्युपधिनिकृतिसंयुक्त इहामुत्र चाशुभफलमकुशल कर्मोपचिनोत्युपदिश्यमानमपि च श्रेयो न प्रतिपद्यते । तस्मादार्जव धर्म इति ॥

अलोभ' शौचलक्षणम् । शुचिभावः शुचिकर्म वा शौच भावविशुद्धि निष्कल्मपता धर्मसाधनमात्रास्वप्यनभिष्वङ्ग इत्यर्थ । अशुचिर्हि भावकल्मपसंयुक्त इहामुत्र चाशुभफलमकुशल कर्मोपचिनोत्युपदिश्यमानमपि च श्रेयो न प्रतिपद्यते । तस्माच्छौच धर्म इति ॥

सत्यर्थे भव वच सत्य सद्भ्यो वा हित सत्यम् । तदननृत-

---

१ धर्मसाधनमात्रा —रजोहरणमुखवस्त्रिकाचोलपट्टकपात्रादिलक्षणास्तास्वप्यनाभिष्वङ्गो विगतमूर्च्छ इत्यर्थ ।

मपरुषमपिशुनमनसभ्यमचपलमनाविलमविरलमसम्भ्रान्त मधुरमभिजातमसदिग्ध स्फुटमौदार्ययुक्तमग्राम्यपदार्थाभिव्याहारमसीभरमरागद्वेषयुक्त सूत्रमार्गानुसारमङ्गत्तार्थमर्घ्यमथिजनभावग्रहणसमर्थमात्मपरानुग्राहक निरुपध देशकालोपपन्नमनवद्यमर्हच्छासनप्रशस्त यत मित याचन पृच्छन प्रश्नव्याकरणमिति सत्य धर्म. ॥

योगनिग्रहः सयम' । स सप्तदशविध. । तद्यथा । पृथिवीकायिकसयम अप्कायिकसयम' तेजस्कायिकसयम वायुकायिकसयम वनस्पतिकायिकसयम द्वीन्द्रियसयम त्रीन्द्रियसयम चतुरिन्द्रियसयम पञ्चेन्द्रियसयम प्रेक्ष्यसयमः उपेक्ष्यसयम' अपहृत्यसयम प्रमृज्यसयम कायसयमः वाक्सयम. मन.सयम उपकरणसयम इति सयमो धर्मः ॥

तपो द्विविधम् । तत्परस्ताद्वक्ष्यते । प्रकीर्णक चेदमनेकविधम् । तद्यथा । यववज्रमध्ये चन्द्रप्रतिमे द्वे, कनकरत्नमुक्तावल्यस्तिस्र., सिंहविक्रीडिते द्वे, सप्तसप्तमिकाद्या. प्रतिमाश्चतस्रः, भद्रोत्तरमाचाम्ल वर्धमान सर्वतोभद्रमित्येवमादि । तथा द्वादश भिक्षुप्रतिमा मासिकाद्या आसप्तमासिक्या' सप्त, सप्तरात्रिक्याः तिस्र , अहोरात्रिकी, रात्रिकी चेति ॥

बाह्याभ्यन्तरोपधिशरीरान्नपानाद्याश्रयो भावदोषपरित्याग स्त्याग ॥

शरीरधर्मोपकरणादिषु निर्ममत्वमाकिञ्चन्यम् ॥

व्रतपरिपालनाय ज्ञानाभिवृद्धये कषायपरिपाकाय च गुरु-

---

१ अभिमदकरम् । आश्वेव प्रस्तुतार्थपरिसमाप्तिकारि ।

२ गणधरादिग्रथित सूत्र तस्य यो मार्ग उत्सर्गापवादलक्षण ।

३ अन्येन पृष्ट प्रवचनाविरुद्ध व्याकरोतीति ।

४ अ ९ सू १९, २०

५ दशाश्रुतस्कधे अ ७

कुलवासो ब्रह्मचर्यमस्वातन्त्र्यं गुर्वधीनत्व गुरुनिर्देशस्थायित्वमित्यर्थ च। पञ्चाचार्या प्रोक्ताः प्रव्राजको दिगाचार्यः श्रुतोद्देष्टा श्रुतसमुद्देष्टा आम्नायार्थवाचक इति। तस्य ब्रह्मचर्यस्येमे विशेषगुणा भवन्ति। अब्रह्मविरतिव्रतभावना यथोक्ता इष्टस्पर्शरसरूपगन्धशब्दविभूषानभिनन्दित्व चेति ॥ ६ ॥

अनित्याशरणससारैकत्वान्यत्वाशुचित्वास्रवसवरनिर्जरालोकबोधिदुर्लभधर्मस्वाख्याततत्त्वानुचिन्तनमनुप्रेक्षाः॥७॥

एता द्वादशानुप्रेक्षा. तत्र बाह्याभ्यन्तराणि शरीरशय्यासन वस्त्रादीनि द्रव्याणि सर्वसयोगाश्चानित्या इत्यनुचिन्तयेत्। एव ह्यस्य चिन्तयत. तेष्वभिष्वङ्गो न भवति मा भून्मे तद्वियोगज दु खमित्यनित्यानुप्रेक्षा ॥

यथा निराश्रये जनविरहिते वनस्थलीपृष्ठे बलवता क्षुत्परिगतेनामिषैषिणा सिंहेनाभ्याहतस्य मृगशिशो शरण न विद्यते एव जन्मजरामरणव्याधिप्रियविप्रयोगाप्रियसप्रयोगेप्सितालाभदारिद्र्य-दौर्भाग्यदौर्मनस्यमरणादिसमुत्थेन दु खेनाभ्याहतस्य जन्तो ससारे शरण न विद्यत इति चिन्तयेत्। एव ह्यस्य चिन्तयतो नित्यमशरणोऽस्मीति नित्योद्विग्नस्य सासारिकेषु भावेष्वनभिष्वङ्गो भवति। अर्हच्छासनोक्त एव विधौ घटते तद्धि पर शरणमित्यशरणानुप्रेक्षा॥

अनादौ ससारे नरकतिर्यग्योनिमनुष्यामरभवग्रहणेषु चक्रव-

१ सामयिकव्रतादेरारोपयिता।

२ सचित्ताचित्तमिश्रवस्त्वनुज्ञायी।

३ श्रुतमागमसुद्दिशति य प्रथमत ।

४ एवमुद्दिष्टगुनादरपाये तदेव श्रुत समुद्दिशत्यनुजानीते या य स्थिरपरिचितकारयितृत्वेन सम्यगवधारणानुप्रवचनेन च स श्रुतसमुद्देष्टा।

५ आम्नाय आगमस्तस्योत्सर्गापवादलक्षणोऽर्थस्त वाचे परमार्थप्रवचनार्थकथने नानुग्राहक ।

त्परिवर्तमानस्य जन्तोः सर्व एव जन्तव' स्वजना परजना वा । न हि स्वजनपरजनयोर्व्यवस्था विद्यते । माता हि भूत्वा भगिनी भार्या दुहिता च भवति । भगिनी भूत्वा माता भार्या दुहिता च भवति । भार्या भूत्वा भगिनी दुहिता माता च भवति । दुहिता भूत्वा माता भगिनी भार्या च भवति ॥ तथा पिता भूत्वा भ्राता पुत्र' पौत्रश्च भवति । भ्राता भूत्वा पिता पुत्र, पौत्रश्च भवति । पौत्रो भूत्वा पिता भ्राता पुत्रश्च भवति । पुत्रो भूत्वा पिता भ्राता पौत्रश्च भवति । भर्ता भूत्वा दासो भवति । दासो भूत्वा भर्ता भवति । शत्रुर्भूत्वा मित्र भवति । मित्र भूत्वा शत्रुर्भवति । पुमान्भूत्वा स्त्री भवति नपुसक च । स्त्री भूत्वा पुमान्नपुसक च भवति । नपुसक भूत्वा स्त्री पुमाश्च भवति । एव चतुरशीतियोनिप्रमु[illegible] सहस्रेषु रागद्वेषमोहाभिभूतैर्जन्तुभिरनिवृत्तविषयतृष्णैरन्योन्यभक्ष[illegible] भिघातवधबन्धाभियोगाक्रोशादिजनितानि तीव्राणि दु खानि [illegible] न्ते । अहो द्वन्द्वाराम कष्टस्वभाव. ससार इति चिन्तयेत् । [illegible] स्य चिन्तयत ससारभयोद्विग्नस्य निर्वेदो भवति । नि[illegible] ससारप्रहाणाय घटत इति ससारानुप्रेक्षा ॥

एक एवाह न मे कश्चित्स्व परो वा विद्यते । [illegible] जाये । एक एव म्रिये । न मे कश्चित्स्वजनसन [illegible] व्याधिजरामरणादीनि दुःखान्यपहरति बन्धुसहायी [illegible] एक एवाह स्वकृतकर्मफ[illegible]मनुभवामीति चिन्तयेत् । [illegible] यत स्वजनसञ्ज्ञकेषु स्नेहानुरागप्रतिबन्धो न भवति [illegible] द्वेषानुबन्ध । ततो नि.सङ्गतामभ्युपगतो मोक्षायैव [illegible] नुप्रेक्षा ॥

१ [illegible]षु शीतोष्णसुखदु [illegible]दिरूपेषु आरमण य[illegible]

शरीरव्यतिरेकेणात्मानमनुचिन्तयेत् । अन्यच्छरीरमन्योऽहम् ऐन्द्रियकं शरीरमतीन्द्रियोऽहम् अनित्यं शरीरं नित्योऽहम् अज्ञं शरीरं ज्ञोऽहम् आद्यन्तवच्छरीरमनाद्यन्तोऽहम् बहूनि च मे शरीरशतसहस्राण्यतीतानि संसारे परिभ्रमतः स एवायमहमन्यस्तेभ्य इत्यनुचिन्तयेत् । एवं ह्यस्य चिन्तयतः शरीरप्रतिबन्धो न भवतीति अन्यश्च शरीरान्नित्योऽहमिति निःश्रेयसे संघटत इत्यन्यत्वानुप्रेक्षा ॥

अशुचि खल्विदं शरीरमिति चिन्तयेत् । तत्कथमशुचीति चेदाद्युत्तरकारणाशुचित्वादशुचिभाजनत्वादशुच्युद्भवत्वादशुभपरिणामपाकानुबन्धादशक्यप्रतीकारत्वाच्चेति । तत्राद्युत्तरकारणाशुचित्वात्तावच्छरीरस्याद्यं कारणं शुक्रं शोणितं च तदुभयमत्यन्ताशुचीति उत्तरमाहारपरिणामादि । तद्यथा । कवलाहारो हि ग्रस्तमात्र एव श्लेष्माशयं प्राप्य श्लेष्मणा द्रवीकृतोऽत्यन्ताशुचिर्भवति । ततः पित्ताशयं प्राप्य पच्यमानोऽम्लीकृतोऽशुचिरेव भवति। पक्वो वाय्वाशयं प्राप्य वायुना विभज्यते पृथक् खलः पृथग् रसः। खलान्मूत्रपुरीषादयो मलाः प्रादुर्भवन्ति रसाच्छोणितं परिणमति शोणितान्मांसम् मांसान्मेदः मेदसोऽस्थीनि अस्थिभ्यो मज्जा मज्जाभ्यः शुक्रमिति । सर्वं चैतत् श्लेष्मादिशुक्रान्तमशुचिर्भवति तस्मादाद्युत्तरकारणाशुचित्वादशुचि शरीरमिति॥ किं चान्यत् अशुचिभाजनत्वात् अशुचीनां खल्वपि भाजनं शरीरं कर्णनासाक्षिदन्तमलस्वेदश्लेष्मपित्तमूत्रपुरीषादीनाम् वस्करभूतं तस्मादशुचीति ॥ किं चान्यत् । अशुच्युद्भवत्वात् एषामेव कर्णमलादीनामुद्भवः शरीरं तत उद्भवन्तीति । अशुचौ च गर्भे संभवतीति अशुचि शरीरम् ॥ किं चान्यत् । अशुभपरिणामपाकानुबन्धादार्तवे बिन्दोराधानात्प्रभृति खल्वपि शरीरं कललार्बुदपेशीघनव्यूहसंपूर्णगर्भकौमारयौवनस्थविरभावजनकेनाशुभपरिणामपाके-

१ स्थूलभाग ।

नानुबद्ध दुर्गन्धि पूतिस्वभाव दुरन्त तस्मादशुचि ॥ किं चान्यत् ।
अशक्यमतीकारत्वात् अशक्यमतीकार खल्वपि शरीरस्याशुचित्वमु-
द्वर्तनरूक्षणस्नानानुलेपनधूपमघर्षवासयुक्तिमाल्यादिभिरप्यस्य न
शक्यमशुचित्वमपनेतुमशुच्यात्मकत्वाच्छुन्युपघातकत्वाच्चेति । तस्मा-
दशुचि शरीरमिति । एव ह्यस्य चिन्तयत शरीरे निर्वेदो भवति ।
निर्विण्णश्च शरीरप्रहाणाय घटत इति अशुचित्वानुप्रेक्षा ॥

आस्रवानिहामुत्रापाययुक्तान्महानदीस्रोतोवेगतीक्ष्णानकुशला-
गमकुशलनिर्गमद्वारभूतानिन्द्रियादीनवद्यतश्चिन्तयेत् । तद्यथा । स्पर्श-
नेन्द्रियप्रसक्तचित्त. सिद्धोऽनेकविद्यावलसपन्नोऽप्याकाशगोऽष्टाङ्ग
महानिमित्तपारगो गार्ग्य. सत्यकिर्निधनमाजगाम । तथा प्रभूत-
यवसोदकप्रमाथावगाहादिगुणसपन्नवनविचारिणश्च मदोत्कटा बल
वन्तोऽपि हस्तिनो हस्तिबन्धकीषु स्पर्शनेन्द्रियसक्तचित्ताग्रहणमुपग
च्छन्ति। ततो बन्धवधदमनवाहनाङ्कुशपार्ष्णिप्रतोदाभिघातादिजनि-
तानि तीव्राणि दु.खान्यनुभवन्ति । नित्यमेव स्वयूथस्य स्वच्छन्द-
प्रचारसुखस्य वनवासस्यानुस्मरन्ति तथा मैथुनसुखप्रसङ्गादाहितगर्भा-
श्वतरी प्रसवकाले प्रसवितुमशक्नुवन्ती तीव्रदु.खाभिहतावशा मरण-
मभ्युपैति । एव सर्वे एव स्पर्शनेन्द्रियप्रसक्ता इहामुत्र च विनिपात-
मृच्छन्तीति ॥ तथा जिह्वेन्द्रियप्रसक्ता मृतहस्तिशरीरस्थस्रोतोवेगो-
ढवायसवत् हैमनघृतकुम्भप्रविष्टमूषिकवत् गोष्ठप्रसक्तह्रदवासिकूर्म-
वत् मासपेशीलुब्धश्येनवत् बडिशामिषगृद्धमत्स्यवच्चेति ॥ तथा घ्राणे-
न्द्रियप्रसक्ता ओषधिगन्धलुब्धपन्नगवत् पललगन्धानुसारिमूषिकव-

१ स्ववनत खण्डयत'—जीवस्यापकारिण ।
२ वेगेनोन्नो दूर नीतो वायस ।
३ हैमन हेमन्तोद्भवत्वात्शीतेन घनीभूतम् ।
४ मत्स्यवेधय नस्यमासङ्गघमत्स्यवत् ।

चेति ॥ तथा चक्षुरिन्द्रियप्रसक्ताः स्त्रीदर्शनप्रसङ्गादर्जुनकचोरवत् दीपालोकलोलपतङ्गवद्विनिपातमृच्छन्तीति चिन्तयेत् । तथा श्रोत्रेन्द्रियप्रसक्तास्तित्तिरकपोतकपिञ्जलवत् गीतसङ्गीतध्वनिलोलमृगवद्विनिपातमृच्छन्तीति चिन्तयेत् । एवं हि चिन्तयन्नास्रवनिरोधाय घटत इति आस्रवानुप्रेक्षा ॥

संवरांश्च महाव्रतादिगुप्त्यादिपरिपालनाद्गुणतश्चिन्तयेत् सर्वे ह्येते यथोक्तास्रवदोषाः संवृतात्मनो न भवन्तीति चिन्तयेत् । एवं ह्यस्य चिन्तयतो मतिः संवरायैव घटत इति संवरानुप्रेक्षा ॥

निर्जरा वेदना विपाक इत्यनर्थान्तरम् । स द्विविधोऽबुद्धिपूर्वः कुशलमूलश्च । तत्र नरकादिषु कर्मफलविपाको योऽबुद्धिपूर्वकस्तमवद्यतोऽनुचिन्तयेदकुशलानुबन्ध इति । तपःपरीषहजयकृतः कुशलमूलः । तं गुणतोऽनुचिन्तयेत् । शुभानुबन्धो निरनुबन्धो वेति । एवमनुचिन्तयन् कर्मनिर्जरणायैव घटत इति निर्जरानुप्रेक्षा ॥

पञ्चास्तिकायात्मकं विविधपरिणाममुत्पत्तिस्थित्यन्यतानुग्रहप्रलययुक्तं लोकं चित्रस्वभावमनुचिन्तयेत् । एवं ह्यस्य चिन्तयतस्तत्त्वज्ञानविशुद्धिर्भवतीति लोकानुप्रेक्षा ॥

अनादौ संसारे नरकादिषु तेषु भवग्रहणेष्वनन्तकृत्वः परिवर्तमानस्य जन्तोर्विविधदुःखाभिहतस्य मिथ्यादर्शनाद्युपहतमतेर्ज्ञानदर्शनावरणमोहान्तरायोदयाभिभूतस्य सम्यग्दर्शनादिविशुद्धो बोधिर्दुर्लभो भवतीत्यनुचिन्तयेत् । एवं ह्यस्य बोधिदुर्लभत्वमनुचिन्तयतो बोधिं प्राप्य प्रमादो न भवतीति बोधिदुर्लभत्वानुप्रेक्षा ॥

सम्यग्दर्शनद्वारः पञ्चमहाव्रतसाधनो द्वादशाङ्गोपदिष्टतत्त्वो गुप्त्यादिविशुद्धव्यवस्थानः संसारनिर्वाहको निःश्रेयसप्रापको भग

१ अर्जुनचौरकथा आचाराङ्गटीकातोऽवसेया ।
२ सम्यक्त्वाधिगमं जिनप्रणीतधर्मप्राप्तिरित्यर्थः ।

वता परमर्पिणार्हताहो व्याख्यातो धर्म इत्येवमनुचिन्तयेत् । एव ह्यस्य धर्मस्वाख्याततत्त्वमनुचिन्तयतो मार्गाच्यवने तदनुष्ठाने च व्यवस्थान भवतीति धर्मस्वाख्याततत्त्वानुचिन्तनानुप्रेक्षा ॥७॥

उक्ता अनुप्रेक्षा. । परीषहान्वक्ष्याम' ।

## मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहा ॥ ८ ॥

सम्यग्दर्शनादेर्मोक्षमार्गादच्यवनार्थं कर्मनिर्जरार्थं च परिषोढव्या परीषहा इति ॥८॥

तद्यथा ।

## क्षुत्पिपासाशीतोष्णदशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्याक्रोशवधयाचनालाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाज्ञानादर्शनानि ॥ ९ ॥

क्षुत्परीषह पिपासा शीत उष्ण दशमशक नाग्न्य अरति स्त्रीपरीषह' चर्यापरीषह निषद्या शय्या आक्रोश वध' याचन अलाभ रोग तृणस्पर्श मल सत्कारपुरस्कारः प्रज्ञाज्ञाने अदर्शनपरीषह इत्येते द्वाविंशतिर्धर्मविघ्नहेतवो यथोक्त प्रयोजनमभिसधाय रागद्वेषो निहत्य परीषहा परिषोढव्या भवन्ति ।

---

१ अहो इत्याश्चर्ये ।

२ परीति समन्तात् स्वहेतुभिरुदीरिता मार्गाच्यवननिर्जरार्थं साध्वादिभि सह्यन्ते इति परीषहा । ते च द्वाविंशतिसख्याका –१ दिगिञ्छापरीषह ( बुभुक्षा परीषह ) बुभुक्षा अत्यन्तव्याकुलत्वहेतुरप्यसयमभीरुतया आहारपरिपाकादिवाञ्छा विनिवर्तनेन परीति सर्वप्रकार सह्यत इति परीषह दिगिञ्छापरीषह । २ एव पिपासापि । ३ शीत शिशिर स्पर्शो तदेव परीषह शीतपरीषह । ४ एव उष्णपरीषह । ५दशमशकपरीषह । ६ अचेल चेलाभावो जिनकल्पिकादीनाम्, अन्येषा तु भिन्नमल्पमूल्य च चेलमप्यचेलमेव अवस्त्राशीलादिवत्, तदेव परीषहो अचेलपरीषह । ७ रमण रति सयमविषया धृति , तद्विपरीता त्वरति सैव परीषह

पञ्चानामेव कर्मप्रकृतीनामुदयादेते परीषहा[1] प्रादुर्भवन्ति। तद्यथाज्ञानावरणवेदनीयदर्शनचारित्रमोहनीयान्तरायाणामिति ॥९॥

सूक्ष्मसंपरायच्छद्मस्थवीतरागयोश्चतुर्दश ॥ १० ॥

सूक्ष्मसंपरायसंयते छद्मस्थवीतरागसंयते च चतुर्दश परीषहा भवन्ति क्षुत्पिपासाशीतोष्णदंशमशकचर्याप्रज्ञाज्ञानालाभशय्यावधरोगतृणस्पर्शमलानि ॥१०॥

एकादश जिने ॥ ११ ॥

एकादश परीषहाः संभवन्ति जिने वेदनीयाश्रयाः। तद्यथा। क्षुत्पिपासाशीतोष्णदंशमशकचर्याशय्यावधरोगतृणस्पर्शमलपरीषहाः ॥ ११ ॥

बादरसंपराये सर्वे ॥ १२ ॥

बादरसंपरायसंयते सर्वे द्वाविंशतिरपि परीषहाः संभवन्ति ॥ १२ ॥

---

अरतिपरीषह । ८ स्त्रीपरीषह । ९ चरण चर्या ग्रामानुग्राम विहरणात्मिका सैव परीषह चर्यापरीषह । १० निषेधन निषेध पापकर्मणा गमनादिक्रियायाश्च सप्रयोजनमस्या नैषेधिकी–श्मशानादिका स्वाध्यायादिभूमि, निषद्येति यावत् सैव परीषहो नैषेधिकीपरीषह । ११ शय्यापरीषह । १२ आक्रोशनमाक्रोश असत्यभाषात्मक, स एव परीषह आक्रोशपरीषह । १३ वधपरीषह । १४ याच्ञापरीषह । १५ अलाभपरीषह १६ रोगपरीषह । १७ तृणस्पर्शपरीषह । १८ जल्ल (मल) परीषह । १९ सत्कारपुरस्कारपरीषह । २० प्रज्ञापरीषह । २१ अज्ञानपरीषह । २२ दर्शन सम्यग्दर्शन तदेव क्रियादिवादिना विचित्रमतश्रवणेऽपि सम्यक्परिषह्यमाण निश्चलचित्ततया धार्यमाण परीषहो दर्शनपरीषह । यद्वा–दर्शनशब्देन दर्शनव्यामोह इतुरैहिकामुष्मिकफलानुपलम्भादिरिह गृह्यते, तत स एव परीषहो दर्शनपरीषह ।

१ सूक्ष्मसम्परायसंयतगुणस्थानस्य लक्षणम्–अतिसूक्ष्मसञ्ज्वलनलोभकषायसत्त्वविषयकत्वम्, गुणश्रेणिसमारोहणे सति दशमगुणस्थानवर्तिरूपत्व वा सूक्ष्मसम्परायचारित्रस्य लक्षणम्।

२ छद्म आवरण, तत्र स्थिता छद्मस्था सावरणज्ञाना इत्यर्थ । वीतोऽपेतो राग सकलमोहोपशमात् समस्तमोहक्षयाच्च यस्यासौ वीतराग क्रमेणैकादशगुणस्थानवर्ती द्वादशस्थानवर्ती च संयतौ ग्राह्यौ।

३ बादरा अकिट्टीकृता सम्पराया –सञ्ज्वलनक्रोधादयो यस्मिन् स तथा।

ज्ञानावरणे प्रज्ञाज्ञाने ॥ १३ ॥

ज्ञानावरणोदये प्रज्ञानानपरीपहौ भवत ॥ १३ ॥

दर्शनमोहान्तराययोरदर्शनालाभौ ॥ १४ ॥

दर्शनमोहान्तराययोरदर्शनालाभो यथासङ्ख्य दर्शनमोहादयेऽदर्शनपरीपह ल्पभान्तरायोदयेऽलाभपरीपह' ॥ १४ ॥

चारित्रमोहे नाग्न्यारतिस्त्रीनिपद्याक्रोशयाचनासत्कारपुरस्कारा ॥ १५ ॥

चारित्रमोहोदये एते नाग्न्यादय सप्त परीपहा भवन्ति॥१५॥

वेदनीये शेषा: ॥ १६ ॥

वेदनीयोदये शेपा एकादश परीपहा भवन्ति ये जिने सभवन्तीत्युक्तम्। कुत शेपा। एभ्य' प्रज्ञानानादर्शनालाभनाग्न्यारतिस्त्री निपद्याक्रोशयाचनासत्कारपुरस्कारेभ्य इति ॥ १६ ॥

एकादयो भाज्या युगपदेकोनविंशते: ॥ १७ ॥

एपा द्वाविंशते. परीपहाणामेकादयो भजनीया युगपदेकस्मिन् जीवे आ एकोनविंशते । अत्र शीतोष्णपरीपहौ युगपन्न भवत'। अत्यन्तविरोधित्वात्। तथा चर्याशय्यानिषद्यापरीपहाणामेकस्य सभवे द्वयोरभाव ॥१७॥

सामायिकच्छेदोपस्थाप्यपरिहारविशुद्धिसूक्ष्मसपराययथाख्यातानि चारित्रम् ॥ १८ ॥

सामायिकसयम' छेदोपस्थाप्यसयम परिहारविशुद्धिसयम. सूक्ष्मसपरायसंयम' यथाख्यातसयम इति पञ्चविध चारित्रम्। तत्पुलाकादिपु विस्तरेण वक्ष्याम ॥१८॥

---

१ अ ९ सू ४८

अनशनावमौदर्यवृत्तिपरिसंख्यानरसपरित्यागविविक्तशय्यासनकायक्लेशा बाह्यं तपः ॥ १९ ॥

अनशन अवमौदर्यं वृत्तिपरिसङ्ख्यानं रसपरित्यागः विविक्तशय्यासनता कायक्लेश इत्येतत्षड्विधं बाह्यं तपः सम्यग्योगनिग्रहो गुप्तिरित्यतः प्रभृति सम्यगित्यनुवर्तते । संयमरक्षणार्थं कर्मनिर्जरार्थं च चतुर्थषष्ठाष्टमादि सम्यगनशनं तपः ॥

अवमौदर्यम् अवममित्यूननाम । अवममुदरमस्य अवमोदरः अवमोदरस्य भावः अवमौदर्यम् । उत्कृष्टावकृष्टौ वर्जयित्वा मध्यमेन कवलेन त्रिविधमवमौदर्यं भवति । तद्यथा । अल्पाहारावमौदर्यमुपार्धावमौदर्यं प्रमाणप्राप्तात्किंचिदूनावमौदर्यमिति कवलपरिसङ्ख्यानं च प्राग्द्वात्रिंशद्भ्यः कवलेभ्यः ॥

वृत्तिपरिसङ्ख्यानमनेकविधम् । तद्यथा । उत्क्षिप्तान्तप्रान्तचर्यादीनां सक्तुकुल्माषौदनादीनां चान्यतममभिगृह्यावशेषस्य प्रत्याख्यानम् ॥

रसपरित्यागोऽनेकविधः । तद्यथा । मद्यमांसमधुनवनीतादीनां रसविकृतीनां प्रत्याख्यानं विरसरूक्षाद्यभिग्रहश्च ॥

विविक्तशय्यासनता नाम एकान्तेऽनाबाधेऽसंसक्ते स्त्रीपशुपण्डकविवर्जिते शून्यागारदेवकुलसभापर्वतगुहादीनामन्यतमे समाध्यर्थं संलीनता ॥

कायक्लेशोऽनेकविधः । तद्यथा । स्थानवीरासनोत्कटुकासनैकपार्श्वदण्डायतशयनातापनाप्रावृतादीनि सम्यक्प्रयुक्तानि बाह्यं तपः । अस्मात्षड्विधादपि बाह्यात्तपसः सङ्गत्यागशरीरलाघवेन्द्रियविजयसंयमरक्षणकर्मनिर्जरा भवन्ति ॥ १९ ॥

---

१ जानुप्रमाणागनतानितम्बस्याधस्तात् समाङ्घ्यन च तदासनं निवेश च सद दस्य एवास्ते ।

२ विनयेन भूमौ प्रामस्फिग्द्वयस्य भवति ।

मानाम् भवति । परिहारो मासिकादि. । उपस्थापन पुनर्दीक्षण पुनश्चरण पुनर्व्रतारोपणमित्यनर्थान्तरम् । तदेतन्नवविधं प्रायश्चित्त देश काल शक्ति सहनन सयमविराधना च कायेन्द्रियजातिगुणोत्कर्षकृता च प्राप्य विशुद्ध्यर्थं यथार्हं दीयते चाचर्यते च । चिती सज्ञानविशुद्ध्योर्धातु' तस्य चित्तमिति भवति निष्ठान्तमौणादिकं च ॥

एवमेभिरालोचनादिभि' कृच्छ्रैस्तपोविशेषैर्जनितामप्रमाद' त व्यतिक्रम प्रायश्चेतयति चेतयश्च न पुनराचरतीति । ततः प्रायश्चित्तम् । अपराधो वा प्रायस्तेन विशुध्यत इति । अतश्च प्रायश्चित्तमिति ॥२२॥

ज्ञानदर्शनचारित्रोपचारा ॥ २३ ॥

विनयश्चतुर्भेद । तद्यथा । ज्ञानविनयः दर्शनविनय' चारित्रविनय उपचारविनय. । तत्र ज्ञानविनय पञ्चविध मतिज्ञानादि' । दर्शनविनय एकविध एव सम्यग्दर्शनविनय । चारित्रविनय पञ्चविध सामायिकविनयादि' । औपचारिकविनयोऽनेकविध' सम्यग्दर्शनज्ञानचारित्राधिगुणाधिकेष्वभ्युत्थानासनप्रदानवन्दनानुगमादि विनीयते तेन तस्मिन्वा विनयः ॥ २३ ॥

आचार्योपाध्यायतपस्विशैक्षकग्लानगणकुलसङ्घसाधुसमनोज्ञानाम् ॥ २४ ॥

वैयावृत्त्य दशविध । तद्यथा । आचार्यवैयावृत्त्य उपध्यायवैयावृत्त्य तपस्विवैयावृत्त्य शैक्षकवैयावृत्त्य ग्लानवैयावृत्त्यं कुलवैयावृत्त्य गणवैयावृत्त्य सघवैयावृत्त्य साधुवैयावृत्त्य समनोज्ञवैयावृत्त्यमिति । व्यावृत्तभावो वैयावृत्त्य व्यावृत्तकर्म च । तत्राचार्य' पूर्वोक्तः पञ्चविध । आचारगोचरविनय स्वाध्याय वाचार्यादनु तस्मादुपाधीयत इत्युपाध्याय. । सग्रहोपग्रहानुग्रहार्थं चोपाधीयते सग्रहादीन् । वास्योपाधीत इत्युपाध्यायः । द्विसग्रहो निर्ग्रन्थ आचार्योपाध्यायस

१ अ ९ सू ६

ग्रह. । त्रिसग्रहा निर्ग्रन्थी आचार्योपाध्यायप्रवर्तिनीसग्रहा । प्रवर्तिनी दिगाचार्येण व्याख्याता । द्वितीय प्रवर्तते प्रवर्तयति चेति प्रवर्तिनी । विकृष्टोग्रतपोयुक्तस्तपस्वी । अचिरप्रव्रजित शिक्षयितव्य शिक्ष. शिक्षामर्हतीति शैक्षो वा । ग्लान' प्रतीत' । गण. स्थविरसन्ततिसंस्थितिः । कुलमाचार्यसततिमस्थितिः । सघश्चतुर्विध. श्रमणादि । साधव सयता. । सभोगयुक्ता समनोज्ञा. । एषामन्नपानवस्त्रपात्रप्रतिश्रयपीठफलकसस्तारादिभिर्धर्मसाधनैरुपग्रह शुश्रूषा भेषजक्रिया कान्तारविषमदुर्गोपसर्गेष्वभ्युपपत्तिरित्येतदादि वैयावृत्त्यम् ॥ २४ ॥

वाचनाप्रच्छनानुप्रेक्षाम्नायधर्मोपदेशा ॥ २५ ॥

स्वाध्याय. पञ्चविध. । तद्यथा । वाचना प्रच्छन अनुप्रेक्षा आम्नाय. धर्मोपदेश इति । तत्र वाचन शिष्याध्यापनम् । प्रच्छन ग्रन्थार्थयोः । अनुप्रेक्षा ग्रन्थार्थयोरेव मनसाभ्यास. । आम्नायो घोषविशुद्ध परिवर्तन गुणन रूपदानमित्यर्थ' । अर्थोपदेशो व्याख्यानमनुयोगवर्णन धर्मोपदेश इत्यनर्थान्तरम् ॥ २५ ॥

बाह्याभ्यन्तरोपध्यो ॥ २६ ॥

व्युत्सर्गो द्विविध' बाह्य आभ्यन्तरश्च । तत्र बाह्यो द्वादशरूपकस्योपधे । आभ्यन्तर. शरीरस्य कषायाणां चेति ॥ २६ ॥

उत्तमसहननस्यैकाग्रचिन्तानिरोधो ध्यानम् ॥ २७ ॥

उत्तमसहनन वज्रर्षभमर्धवज्रनाराच च । तद्युक्तस्यैकाग्रचिन्तानिरोधश्च ध्यानम् ॥ २७ ॥

आमुहूर्तात् ॥ २८ ॥

तद्ध्यानमामुहूर्तात्भवति परतो न भवति दुर्ध्यानत्वात् ॥२८॥

आर्तरौद्रधर्मशुक्लानि ॥ २९ ॥

तच्चतुर्विधं भवति । तद्यथा । आर्तं रौद्रं धर्मं शुक्लमिति तेषाम् ।२९।

परे मोक्षहेतू ॥ ३० ॥

तेषां चतुर्णां ध्यानानां परे धर्मशुक्ले मोक्षहेतू भवतः । पूर्वे त्वार्तरौद्रे संसारहेतू इति ॥ ३० ॥

अत्राह । किमेषां लक्षणमिति । अत्रोच्यते—

आर्तममनोज्ञानां सम्प्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहारः ॥ ३१ ॥

अमनोज्ञानां विषयाणां सम्प्रयोगे तेषां विप्रयोगार्थं यः स्मृतिसमन्वाहारो भवति तदार्तध्यानमित्याचक्षते ॥ ३१ ॥

किं चान्यत्—

वेदनायाश्च ॥ ३२ ॥

वेदनायाश्चामनोज्ञायाः सम्प्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहार आर्तमिति ॥ ३२ ॥

किं चान्यत्—

विपरीतं मनोज्ञानाम् ॥ ३३ ॥

मनोज्ञानां विषयाणां मनोज्ञायाश्च वेदनाया विप्रयोगे तत्संप्रयोगाय स्मृतिसमन्वाहार आर्तम् ॥ ३३ ॥

किं चान्यत्—

---

१ शोकाक्रन्दनविलपनादिरूपत्वम् ।
२ क्रूरपरिणामादिरूपत्वम् ।
३ जिनप्रणीतभावभावनादिनिमित्तकत्वम् ।
४ असाध्यसमोहादिकरणरूपत्वम् ।
५ अमनोज्ञ —अप्रिय ।

निदानं च ॥ ३४ ॥

कामोपहतचित्तानां पुनर्भवविषयसुखगृद्धानां निदानमार्तध्यानं भवति ॥ ३४ ॥

तदविरतदेशविरतप्रमत्तसंयतानाम् ॥ ३५ ॥

तदेतदार्तध्यानमविरतदेशविरतप्रमत्तसंयतानामेव भवति।३५।

हिंसानृतस्तेयविषयसंरक्षणेभ्यो रौद्रमविरतदेशविरतयोः।३६।

हिंसार्थमनृतवचनार्थं स्तेयार्थं विषयसंरक्षणार्थं च स्मृतिसमन्वाहारो रौद्रध्यानं तदविरतदेशविरतयोरेव भवति ॥ ३६ ॥

आज्ञापायविपाकसंस्थानविचयाय धर्ममप्रमत्तसंयतस्य।३७।

आज्ञाविचयाय अपायविचयाय विपाकविचयाय संस्थानविचयाय च स्मृतिसमन्वाहारो धर्मध्यानम्। तदप्रमत्तसंयतस्य भवति।३७।

किं चान्यत्—

उपशान्तक्षीणकषाययोश्च ॥ ३८ ॥

उपशान्तकषायस्य च धर्मं ध्यानं भवति ॥ ३८ ॥

किं चान्यत्—

शुक्ले चाद्ये पूर्वविदः ॥ ३९ ॥

शुक्ले चाद्ये ध्याने पृथक्त्ववितर्कैकत्ववितर्के चोपशान्तक्षीणकषाययोर्भवतः आद्ये शुक्ले ध्याने पृथक्त्ववितर्कैकत्ववितर्के पूर्वविदो भवतः ॥ ३९ ॥

---

१ 'पूर्वविदः' इति पदमस्य सूत्रस्यैकदेश इति हरिभद्रसिद्धसेनगणिटीकाभ्यां विज्ञायते। अतोऽस्माभिस्तथैव मुद्रापितम्। रायचन्द्रजैनशास्त्रमालामुद्रितपुस्तके 'पूर्वविदः' इति पदस्यानुल्लेख स चिन्त्यः। भाष्ये पूर्वविदो भवत इत्युल्लेखात्। अस्माभिः भाण्डारकर ओरिएण्टल रिसर्च इंस्टिटयूट संगृहीतलिखितपुस्तके पूर्वविदः इति पृथक्तया निर्दिष्टं सूत्रमुपलभ्य टीकाकारसंमत्याऽत्रथा न मुद्रितम्।

परे केवलिनः ॥ ४० ॥

परे द्वे शुक्लध्याने केवलिन एव भवतः न छद्मस्थस्य ॥४०॥

पृथक्त्वैकत्ववितर्कसूक्ष्मक्रियाप्रतिपातिव्युपरत-
क्रियानिवृत्तीनि ॥ ४१ ॥

पृथक्त्ववितर्क एकत्ववितर्क काययोगाना सूक्ष्मक्रियाप्रतिपाति व्युपरतक्रियानिवृत्तीति चतुर्विध शुक्लध्यानम् ॥ ४१ ॥

तत्र्येककाययोगायोगानाम् ॥ ४२ ॥

तदेतच्चतुर्विध शुक्लध्यान त्रियोगस्यान्यतमयोगस्य काययोगस्यायोगस्य च यथासङ्ख्य भवति । तत्र त्रियोगाना पृथक्त्ववितर्कमेकान्यतमयोगानामेकत्ववितर्क काययोगाना सूक्ष्मक्रियम प्रतिपात्ययोगाना व्युपरतक्रियमनिवृत्तीति ॥ ४२ ॥

एकाश्रये सवितर्के पूर्वे ॥ ४३ ॥

एकद्रव्याश्रये सवितर्के पूर्वे ध्याने प्रथमद्वितीये ॥ ४३ ॥
तत्र सविचार प्रथमम् ।

अविचार द्वितीयम् ॥ ४४ ॥

अविचार सवितर्क द्वितीय ध्यान भवति ॥ ४४ ॥
अत्राह । वितर्कविचारयोः कः प्रतिविशेष इति । अत्रोच्यते—

वितर्कः[१] श्रुतम् ॥ ४५ ॥

यथोक्त श्रुतज्ञान वितर्को भवति ॥ ४५ ॥

विचारोऽर्थव्यञ्जनयोगसक्रान्तिः ॥ ४६ ॥

अर्थव्यञ्जनयोगसक्रान्तिर्विचार इति ॥
तदाभ्यन्तर तप सवरत्वादभिनवकर्मोपचयप्रतिषेधक निर्ज-

---

१ अविचार द्वितीयमिति वचनादर्थलभ्य सविचार प्रथममिति । श्रीहरिभद्रस्तु अविचार द्वितीयमिति सूत्रमालोच्य सविचार प्रथममिति भाष्य ग्रथित इति वदति ।

रणफलत्वात्कर्मनिर्जरकम् । अभिनवकर्मोपचयप्रतिषेधकत्वात्पूर्वोपचितकर्मनिर्जरकत्वाच्च निर्वाणप्रापकमिति ॥ ४६ ॥

अत्राह । उक्तं भवता परीषहजयात्तपसोऽनुभावतश्च कर्मनिर्जरा भवतीति । तत्किं सर्वे सम्यग्दृष्टयः समनिर्जरा आहोस्विदस्ति कश्चित्प्रतिविशेष इति । अत्रोच्यते ।

**सम्यग्दृष्टिश्रावकविरतानन्तवियोजकदर्शनमोहक्षपकोपशमकोपशान्तमोहक्षपकक्षीणमोहजिना क्रमशोऽसङ्ख्येयगुणनिर्जरा ॥ ४७ ॥**

सम्यग्दृष्टिः श्रावकः विरतः अनन्तानुबन्धिवियोजकः दर्शनमोहक्षपकः मोहोपशमकः उपशान्तमोहः मोहक्षपकः क्षीणमोहः जिनः इत्येते दश क्रमशोऽसङ्ख्येयगुणनिर्जरा भवन्ति । तद्यथा । सम्यग्दृष्टेः श्रावकोऽसङ्ख्येयगुणनिर्जरः श्रावकाद्विरतः विरतादनन्तानुबन्धिवियोजक इत्येवं शेषाः ॥ ४७ ॥

१ सम्यग्दृष्टिमान् ।

२ आचार्यप्रभृतीन् पर्युपासीनः प्रवचनसारं शृणोतीति श्रावकः । शृण्वंश्च सकलचरणकरणाक्षमो गृहस्थयोग्यमनुगुणशिक्षाव्रतलक्षणधर्ममनुतिष्ठति यथाशक्ति वा । द्वादशप्रकारस्य धर्मस्यैकदेशानुष्ठाय्यपि श्रावक एव ।

३ साधुधर्मानुष्ठायी सर्वस्मात्प्राणातिपातादायावज्जीवं विरतः ।

४ अनन्तः संसारस्तदनुबन्धिनोऽनन्ताः क्रोधादयः । तान् वियोजयत्युपशमयति ।

५ दर्शनमोहोऽनन्तानुबन्धिनश्चत्वारः सम्यग्मिथ्यात्वतदुभयानि च । अस्य सप्तविधस्य दर्शनमोहस्य क्षपकः ।

६ तथास्यैवोपशमकः ।

७ मोहोऽष्टाविंशतिभेदः षोडश कषायाः सम्यक्त्वमिथ्यात्वसम्यग्मिथ्यात्वहास्यरत्यरतिभयशोकजुगुप्सास्त्रीपुंनपुंसकवेदाश्च । अस्योपशमनादुपशान्तमोहः ।

८ अस्यैव सकलस्य क्षपणात् ।

९ क्षपितनिरवशेषमोहः ।

१० चतुर्विधघातिकर्मजयनात् ।

पुलाकबकुशकुशीलनिर्ग्रन्थस्नातका निर्ग्रन्थाः ॥ ४८॥

पुलाको बकुशः कुशीलो निर्ग्रन्थ[1] स्नातक इत्येते पञ्चनिर्ग्रन्थविशेषा भवन्ति । तत्र सततमप्रतिपातिनो जिनोक्तादागमान्निर्ग्रन्थपुलाका[1] । नैर्ग्रन्थ्यं प्रति प्रस्थिताः शरीरोपकरणविभूषानुवर्तिन ऋद्धियशस्कामा[2] सातगौरवाश्रिता अविविक्तपरिवाराः[3] छेदशबलयुक्ता[4] निर्ग्रन्था बकुशाः । कुशीला[5] द्विविधाः प्रतिसेवनाकुशीलाः कषायकुशीलाश्च । तत्र प्रतिसेवनाकुशीलाः नैर्ग्रन्थ्यं प्रति प्रस्थिता अनियतेन्द्रियाः कथंचित्किंचिदुत्तरगुणेषु विराधयन्तश्चरन्ति ते प्रतिसेवनाकुशीलाः[6] । येषां तु संयतानां सतां कथंचित्संज्वलनकषाया उदीर्यन्ते ते कषायकुशीलाः[7] । ये वीतरागच्छद्मस्था ईर्यापथप्राप्तास्ते निर्ग्रन्थाः । ईर्या योगः पन्थाः संयमः योगसंयमप्राप्ता इत्यर्थः । सयोगाः[1] शैलेशीप्रतिपन्नाश्च केवलिनः स्नातका इति ॥ ४८ ॥

संयमश्रुतप्रतिसेवनातीर्थलिङ्गलेश्योपपातस्थानविकल्पतः साध्याः ॥४९॥

एते पुलाकादयः पञ्च निर्ग्रन्थविशेषा एभिः[1] संयमादिभिरनुयोगविकल्पैः साध्या भवन्ति । तद्यथा ।

---

१ धर्मोपकरणान्ते परित्यक्तबाह्याभ्यन्तरोपधयो निर्ग्रन्थाः ।

२ सुखशीलता—सातगौरवम् । तदाश्रिता । गौरवशब्द आदरार्थः ।

३ असंयमादपृथग्भूता घृष्टजङ्घास्तैलादिकृतशरीरमृजाः कर्तरिकाकल्पितकेशा एवंविध परिवारो येषाम् ।

४ सर्वदेशच्छेदाहातीचारजनितशबलेन वैचित्र्येण युक्ता ।

५ अष्टादशसहस्रभेदं शीलं ततः उत्तरगुणभङ्गेन केनचित्कषायोदयेन वा कुत्सितं येषां ते कुशीलाः ।

६ प्रतिसेवनेत्यासेवनं ज्ञानाद्यतिचाराणां भजनं तेन कुत्सितं शीलं येषां ते प्रतिसेवनाकुशीलाः ।

७ कषायाः संज्वलनाख्यास्तदुदयात्कुत्सितं शीलं येषाम् ।

संयम[1] । क[2] कस्मिन्संयमे भवतीति । उच्यते। पुलाकबकुशप्रतिसेवनाकुशीला द्वयो संयमयो सामायिके छेदोपस्थाप्ये च । कषायकुशीलो द्वयो परिहारविशुद्धौ सूक्ष्मसंपराये च । निर्ग्रन्थस्नातकावेकस्मिन्यथाख्यातसंयमे ॥

श्रुतम् । पुलाकबकुशप्रतिसेवनाकुशीला उत्कृष्टेनाभिन्नाक्षरदशपूर्वधरा । कषायकुशीलनिर्ग्रन्थौ चतुर्दशपूर्वधरौ । जघन्येन पुलाकस्य श्रुतमाचारवस्तु । बकुशकुशीलनिर्ग्रन्थानां श्रुतमष्टौ प्रवचनमातर । श्रुतापगत[3] केवली स्नातक इति ॥

---

१ समो रागद्वेषविरहरूप आयो लाभ । अथवा आयो गमन सकलक्रियोपलक्षणमेतत् । सर्वा च क्रिया साधो रागद्वेषाप्रयुक्तस्य निर्जराफला । तादृशसमस्याय समाय । तदेव सामायिकम् ।

२ प्रथमापेक्षया विशुद्धतरसवसावद्ययोगाविरतावस्थानरूपत्व विविक्ततरमहाव्रतारोपणरूपत्व पूर्वपर्यायछेदपूर्वकपर्यायान्तरे उपस्थापनरूपत्व वा छेदोपस्थापनीयस्य लक्षणम् ।

३ सावद्ययोगविरतिरूपत्वे सति तपोविशेषेण विशुद्धरूपत्व यस्मिन् सति तपोविशेषेण सावद्ययोगविरतस्य विशुद्धता भवति तद्रूपत्व वा परिहारविशुद्धचारित्रस्य लक्षणम् ।

४ अतिसूक्ष्मसंज्वलनलोभकषायसत्त्वविषयकत्व गुणश्रेणिसमारोहणे सति दशमगुणस्थानवर्तिरूपत्व वा सूक्ष्मसंपरायचारित्रस्य लक्षणम् ।

५ प्रक्षालितसकलघातिकर्ममलपटल ।

६ अभिन्नमन्यूनम् । एकेनाप्यक्षरेणान्यूनानि दश पूर्वाणि ग्रन्थविशेषान् धारयति ।

७ चतुर्दशपूर्वान् ग्रन्थविशेषान् धारयत ।

८ आचाराङ्ग प्रथमम् ।

९ पञ्च समितय । तिस्रो गुप्तय ।

प्रतिसेवना । पञ्चाना मूलगुणाना रात्रिभोजनविरतिषष्ठानां पराभियोगाद्बलात्कारेणान्यतम प्रतिसेवमान॰ पुलाको भवति । मैथुनमित्येके । बकुशो द्विविध॰ उपकरणबकुश शरीरबकुशश्च । तत्रोपकरणाभिष्वक्तचित्तो विविधविचित्रमहाधनोपकरणपरिग्रहयुक्तो बहुविशेषोपकरणकाङ्क्षायुक्तो नित्य तत्प्रतिसंस्कारसेवी भिक्षुरुपकरणबकुशो भवति । शरीराभिष्वक्तचित्तो विभूषार्थं तत्प्रतिसंस्कारसेवी शरीरबकुश । प्रतिसेवनाकुशीलो मूलगुणानविराधयन्नुत्तरगुणेषु कांचिद्विराधना प्रतिसेवते । कषायकुशीलनिर्ग्रन्थस्नातकानां प्रतिसेवना नास्ति ॥

तीर्थम् । सर्वे सर्वेषा तीर्थकराणा तीर्थेषु भवन्ति । एके त्वाचार्या मन्यन्ते पुलाकबकुशप्रतिसेवनाकुशीलास्तीर्थे नित्य भवन्ति शेषास्तीर्थे वातीर्थे[3] वा ॥

लिङ्गम् । लिङ्ग द्विविधम् । द्रव्यलिङ्ग भावलिङ्ग च । भावलिङ्ग प्रतीत्य सर्वे पञ्च निर्ग्रन्था भावलिङ्गे भवन्ति द्रव्यलिङ्ग प्रतीत्य भाज्या ॥

लेश्या॰ । पुलाकस्योत्तरास्तिस्रो लेश्या भवन्ति । बकुशप्रतिसेवनाकुशीलयो सर्वा षडपि । कषायकुशीलस्य परिहारविशुद्धेस्तिस्र उत्तरा॰ । सूक्ष्मसपरायस्य निर्ग्रन्थस्नातकयोश्च शुक्लैव केवला भवति । अयोग॰ शैलेशीप्रतिपन्नोऽलेश्यो भवति ॥

---

१ १ प्राणातिपात । २ मृषावाद । ३ अदत्तादानम् । ४ मैथुनम् । ५ परिग्रह इति पञ्च मूलगुणा षष्ठी च रात्रिभोजनविरति ।

२ तरन्त्यनेनेति तीर्थं वचन प्रथमगणधरो वा ।

३ कदाचिदतीर्थेऽपि मरुदेवीप्रभृतय श्रूयन्ते । मरुदेवी प्रथमतीर्थंकरस्य श्रीऋषभदेवस्य माता ।

४ रजोहरणमुखवस्त्रिकादि ।

५ ज्ञानदर्शनचारित्राणि ।

६ कदाचिद् द्रव्यलिङ्ग न निमित्त यथा मरुदेव्याम् ।

उपपात । पुलाकस्योत्कृष्टस्थितिषु देवेषु सहस्रारे । बकुश प्रतिसेवनाकुशीलयोर्द्वाविंशतिसागरोपमस्थितिष्वारणाच्युतकल्पयो । कषायकुशीलनिर्ग्रन्थयोस्त्रयस्त्रिंशत्सागरोपमस्थितिषु देवेषु सर्वार्थ सिद्धे । सर्वेषामपि जघन्या पल्योपमपृथक्त्वस्थितिषु सौधर्मे । स्नातकस्य निर्वाणमिति ॥

स्थानम् । असङ्ख्येयानि सयमस्थानानि कषायनिमित्तानि भवन्ति । तत्र सर्वजघन्यानि लब्धिस्थानानि पुलाककषायकुशीलयो तौ युगपदसङ्ख्येयानि स्थानानि गच्छत । तत पुलाको व्युच्छिद्यते कषायकुशीलस्त्वसङ्ख्येयानि स्थानान्येकाकी गच्छति । तत कषायकुशीलप्रतिसेवनाकुशीलबकुशा युगपदसङ्ख्येयानि सयमस्थानानि गच्छन्ति । ततो बकुशो व्युच्छिद्यते । ततोऽसङ्ख्येयानि स्थानानि गत्वा प्रतिसेवनाकुशीलो व्युच्छिद्यते । ततोऽसङ्ख्येयानि स्थानानि गत्वा कषायकुशीलो व्युच्छिद्यते । अत ऊर्ध्वमकषायस्थानानि निर्ग्रन्थ प्रतिपद्यते । सोऽप्यसङ्ख्येयानि स्थानानि गत्वा व्युच्छिद्यते । अत ऊर्ध्वमेकमेव स्थान गत्वा निर्ग्रन्थस्नातको निर्वाण प्राप्नोतीति एषां सयमलब्धिरनन्तानन्तगुणा भवतीति ॥

इति तत्त्वार्थाधिगमेऽर्हत्प्रवचनसग्रहे
नवमोऽध्याय. समाप्त ॥ ९ ॥

---

# अथ दशमोऽध्यायः ।



मोहक्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलम् ॥ १ ॥

मोहनीये क्षीणे ज्ञानावरणदर्शनावरणान्तरायेषु क्षीणेषु च केवलज्ञानदर्शनमुत्पद्यते । आसां चतसृणां कर्मप्रकृतीनां क्षयः केवलस्य हेतुरिति । तत्क्षयादुत्पद्यत इति हेतौ पञ्चमीनिर्देशः । मोहक्षयादिति पृथक्करणं क्रमप्रसिद्ध्यर्थं यथा गम्येत पूर्वं मोहनीयं कृत्स्नं क्षीयते ततोऽन्तर्मुहूर्तं छद्मस्थवीतरागो भवति । ततोऽस्य ज्ञानदर्शनावरणान्तरायप्रकृतीनां तिसृणां युगपत्क्षयो भवति । ततः केवलमुत्पद्यते ॥ १ ॥

अत्राह । उक्तं मोहक्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलमिति । अथ मोहनीयादीनां क्षयः कथं भवतीति । अत्रोच्यते—

बन्धहेत्वभावनिर्जराभ्याम् ॥ २ ॥

मिथ्यादर्शनादयो बन्धहेतवोऽभिहिताः । तेषामपि तदावरणीयस्य कर्मणः क्षयादभावो भवति सम्यग्दर्शनादीनां चोत्पत्तिः । 'तत्त्वार्थश्रद्धानं सम्यग्दर्शनम्' 'तन्निसर्गादधिगमाद्वा' इत्युक्तम् । एवं संवरसंवृतस्य महात्मनः सम्यग्व्यायामस्याभिनवस्य कर्मण उपचयो न भवति पूर्वोपचितस्य च यथोक्तैर्निर्जराहेतुभिरत्यन्तक्षयः । ततः सर्वद्रव्यपर्यायविषयं पारमैश्वर्यमनन्तं

---

१ क्रमस्वभावानाम् ।

२ अ ८ सू १

३ अ १ सू २

४ अ १ सू ३

अन्तिम तीर्थंकर

## ॥ श्री महावीरस्वामी ॥



वीर सर्व सुरा सुरेन्द्र महितो वीर बुधा संश्रिता ।
वीरणाभित स्वकर्मनिचयो वीराय नित्य नम ॥

केवल ज्ञानदर्शन प्राप्य शुद्धो बुद्ध सर्वज्ञ सर्वदर्शी जिन केवली भवति । तत. प्रतनुशुभचतुःकर्मावशेष आयु.कर्मसस्कारवशा द्विहरति ।

ततोऽस्य—

कृत्स्नकर्मक्षयो मोक्ष ॥ ३ ॥

कृत्स्नकर्मक्षयलक्षणो मोक्षो भवति । पूर्वं क्षीणानि चत्वारि कर्माणि पश्चाद्वेदनीयनामगोत्रायुष्कक्षयो भवति । तत्क्षयसमकालमे वौदारिकशरीरवियुक्तस्यास्य जन्मन प्रहाणम् । हेत्वभावाच्चोत्तर स्याप्रादुर्भाव । एषावस्था कृत्स्नकर्मक्षयो मोक्ष इत्युच्यते ॥ ३ ॥

कि चान्यत् ।

औपशमिकादिभव्यत्वाभावाच्चान्यत्र केवलसम्य-क्त्वज्ञानदर्शनसिद्धत्वेभ्यः ॥ ४ ॥

ओपशमिकक्षायिकक्षायौपशमिकौदयिकपारिणामिकाना भा वाना भव्यत्वस्य चाभावान्मोक्षो भवति अन्यत्र केवलसम्यक्त्व केवलज्ञानकेवलदर्शनसिद्धत्वेभ्य । एते ह्यस्य क्षायिका नित्यास्तु मुक्तस्यापि भवन्ति ॥ ४ ॥

तदनन्तरमूर्ध्वं गच्छत्यालोकान्तात् ॥ ५ ॥

तदनन्तरमिति कृत्स्नकर्मक्षयानन्तरमौपशमिकाद्यभावानन्तर चेत्यर्थ । मुक्त ऊर्ध्वं गच्छत्यालोकान्तात् । कर्मक्षये देहवियोग-सि ध्यमानगतिर्लोकान्तप्राप्तयोऽस्य युगपदेकसमयेन भवन्ति । तद्यथा। प्रयोगपरिणामादिसमुत्थस्य गतिकर्मण उत्पत्तिकार्यारम्भविनाशा युगपदेकसमयेन भवन्ति तद्वत् ॥ ५ ॥

अत्राह । प्रहीणकर्मणो निरास्रवस्य कथ गतिर्भवतीति । अत्रोच्यते—

गुणवद्भूमिभागारोपितमृतुकालजात बीजोद्भेदादङ्कुरप्रवालपर्णपुष्पफलकालेष्वविमानितसेकदौर्हृदादियोपणकर्मपरिणत कालच्छिन्न शुष्कमलाब्वप्सु न निमज्जति तदेव गुरुकृष्णमृत्तिकालेपैर्घनैर्बहुभिगलिप्त घनमृत्तिकालेपवेष्टनजनितागन्तुकगौरवमप्सु प्रक्षिप्त तज्जलप्रतिष्ठ भवति यदा त्वस्याद्भि क्लिन्नो मृत्तिकालेपो व्यपगतो भवति तदा मृत्तिकालेपसङ्गविनिर्मुक्त मोक्षानन्तरमेवोर्ध्वं गच्छति आसलिलोर्ध्वतलात् एवमूर्ध्वगौरवगतिधर्मा जीवोऽप्यष्टकर्ममृत्तिकालेपवेष्टित' तत्सङ्गात्ससारमहार्णवे भवसलिले निमग्नो भवासक्तोऽधस्तिर्यगूर्ध्वं च गच्छति सम्यग्दर्शनादिसलिलक्लेदात्प्रहीणाष्टविधकर्ममृत्तिकालेप ऊर्ध्वगौरवादूर्ध्वमेव गच्छत्यालोकान्तात् ॥

स्यादेतत् लोकान्तादप्यूर्ध्वं मुक्तस्य गतिः किमर्थं न भवतीति । अत्रोच्यते । धर्मास्तिकायाभावात् । धर्मास्तिकायो हि जीवपुद्गलाना गत्युपग्रहेणोपकुरुते । स तत्र नास्ति । तस्माद्गत्युपग्रहकारणाभावात्परतो गतिर्न भवत्यप्सु अलाबुवत् । नाधो न तिर्यगित्युक्तम् । तत्रैवानुश्रेणिगतिर्लोकान्तेऽवतिष्ठते मुक्तो नि.क्रिय' इति ॥

क्षेत्रकालगतिलिङ्गतीर्थचारित्रप्रत्येकबुद्धबोधितज्ञानावगाहनान्तरसख्याल्पबहुत्वत: साध्या' ॥ ७ ॥

क्षेत्र काल गति लिङ्ग तीर्थ चारित्र प्रत्येकबुद्धबोधित. ज्ञानमवगाहना अन्तर सख्या अल्पबहुत्वमित्येतानि द्वादशानुयोगद्वाराणि सिद्धस्य भवन्ति । एभि सिद्ध साध्योऽनुगम्यश्चिन्त्यो व्याख्येय इत्येकार्थत्वम् । तत्र पूर्वभावप्रज्ञापनीय प्रत्युत्पन्नभावप्रज्ञापनीयश्च द्वौ नयौ भवत. । तत्कृतोऽनुयोगविशेष । तद्यथा ।

---

१ पूर्व —अतीत ।

२ प्रत्युत्पन्न —वर्तमान ।

क्षेत्रम् । कस्मिन् क्षेत्रे सिद्धयतीति । मत्युत्पन्नभावमज्ञापनीय मति सिद्धिक्षेत्रे सिद्धयति । पूर्वभावप्रज्ञापनीयस्य जन्म प्रतिपञ्चद-शसु र्कमभूमिषु जातः सिद्धयति । संहरण प्रति मानुषक्षेत्रे सिद्धयति । तत्र प्रमत्तसयताः सयतासयताश्च संह्रियन्ते । श्रमण्यपगतवेद. परि-हारविशुद्धिसयत पुलाकोऽप्रमत्तश्चतुर्दशपूर्वी आहारकशरीरीति न संह्रियन्ते । ऋजुसूत्रनयः शब्दादयश्च त्रय. प्रत्युत्पन्नभावप्रज्ञापनीया. शेषा नया उभयभाव प्रज्ञापयन्तीति ॥

काल । अत्रापि नयद्वयम् । कस्मिन्काले सिद्धयतीति । प्रत्युत्पन्नभावमज्ञापनीयस्य अकाले सिद्धयति । पूर्वभावमज्ञापनी-यस्य जन्मतः संहरणतश्च । जन्मतोऽवसर्पिण्यामुत्सर्पिण्यामनवस र्पिण्युत्सर्पिण्या च जात. सिद्धयति । एव तावदविशेषतः । विशेषतोऽ-प्यवसर्पिण्या सुषमदुःषमायां सख्येयेषु सर्वेषु शेषेषु जात' सिद्धयति । दु'षमसुषमाया सर्वस्या सिद्धयति दु षमसुषमायां जातो दु षमाया सिध्यति न तु दु.षमायां जात' सिध्यति अन्यत्र नैव सिध्यति । संहरण प्रति सर्वकालेष्ववसर्पिण्यामुत्सर्पिण्यामनवसर्पिण्युत्सर्पिण्या च सिध्यति ॥

गतिः । मत्युत्पन्नभावप्रज्ञापनीयस्य सिद्धिगत्या सिध्यति । शेषास्तु नया द्विविधा अनन्तरपश्चात्कृतगतिकश्च एकान्तरपश्चा त्कृतगतिकश्च । अनन्तरपश्चात्कृतगतिकस्य मनुष्यगत्यां सिध्यति । एकान्तरपश्चात्कृतगतिकस्याविशेषेण सर्वगतिभ्य' सिध्यति ॥

लिङ्ग स्त्रीपुनपुसकानि । मत्युत्पन्नभावमज्ञापनीयस्यावेद सिध्यति । पूर्वभावमज्ञापनीयस्यानन्तरपश्चात्कृतगतिकस्य परम्पर-पश्चात्कृतगतिकस्य च त्रिभ्यो लिङ्गेभ्य सिध्यति ।

तीर्थम् । सन्ति तीर्थकरसिद्धा तीर्थकरतीर्थे नोतीर्थकरसिद्धा'

तीर्थंकरतीर्थेऽतीर्थंकरासिद्धा' तीर्थंकरतीर्थे । एव तीर्थंकरीतीर्थे सिद्धा अपि ॥

लिङ्गे पुनरन्यो विकल्प उच्यते । द्रव्यलिङ्गभावलिङ्गमलिङ्ग-मिति प्रत्युत्पन्नभावप्रज्ञापनीयस्यालिंग, सिध्यति । पूर्वभावप्रज्ञापनी-यस्य भावलिङ्ग प्रति स्वलिङ्गे सिध्यति । द्रव्यलिंग त्रिविध स्वलिङ्गमन्यलिङ्ग गृहिलिङ्गमिति तत्प्रतिभाज्यम् । सर्वस्तु भावलिङ्ग प्राप्त' सिध्यति ॥

चारित्रम् । प्रत्युत्पन्नभावप्रज्ञापनीयस्य नोचारित्री नोऽचारित्री सिध्यति । पूर्वभावप्रज्ञापनीयो द्विविध अनन्तरपश्चात्कृतिकश्च परम्परपश्चात्कृतिकश्च । अनन्तरपश्चात्कृतिकस्य यथाख्यातसयत, सिध्यति । परम्परपश्चात्कृतिकस्य व्यञ्जितेऽव्यञ्जिते च । अव्यञ्जिते त्रिचारित्रपश्चात्कृतश्चतुश्चारित्रपश्चात्कृत, पञ्चचारित्रपश्चात्कृतश्च । व्यञ्जिते सामायिकसूक्ष्मसापरायिकयथाख्यातपश्चात्कृतसिद्धा छेदो-पस्थाप्यसूक्ष्मसम्परायथाख्यातपश्चात्कृतसिद्धा सामायिकच्छेदो-पस्थाप्यसूक्ष्मसम्पराययथाख्यातपश्चात्कृतसिद्धा छेदोपस्थाप्यपरि-हारविशुद्धिसूक्ष्मसम्पराययथाख्यातपश्चात्कृतसिद्धा सामायिकच्छे-दोपस्थाप्यपरिहारविशुद्धिसूक्ष्मसम्पराययथाख्यातपश्चात्कृतसिद्धा ॥

प्रत्येकबुद्धबोधितः । अस्य व्याख्याविकल्पश्चतुर्विध' । तद्यथा ।

---

१ तीर्थकरीतीर्थेऽप्येत एव विकल्पा । यत आह ' एव तित्थकरी तित्थे ' इति ( सिद्धप्राभृतगाथा ३० ) विशेषस्तु तीर्थकरीतीर्थाभिलाप इति मल्लिस्वामिनी ( एकोनविंशतितमस्तीर्थङ्कर ) प्रभृतीनाम् ।

२ मौनपरिव्राजकादिवेष ।

३ गृहे लिंग दीर्घकेशकच्छबन्धादि ।

४ कदाचित्सलिंग कदाचिदलिंग इति ।

५ समस्तचारित्रमोहस्योपशमक्षयान्यतररूपत्वे सति शुद्धात्मस्वभावावस्थानापेक्षारूपत्व यथाख्यातचारित्रस्य लक्षणम् ।

अस्ति स्वयंबुद्धसिद्धः। स द्विविधः अर्हंश्च तीर्थकर' प्रत्येकंबुद्धसिद्धश्च। बुद्धबोधितसिद्धाः त्रिचतुर्थो विकल्पः परबोधकसिद्धाः स्वेष्टकारिसिद्धाः॥

ज्ञानम्। अत्र प्रत्युत्पन्नभावप्रज्ञापनीयस्य केवली सिद्ध्यति। पूर्वभावप्रज्ञापनीयो द्विविधः अनन्तरपश्चात्कृतिकश्च परम्परपश्चात्कृतिकश्च अव्यञ्जिते च व्यञ्जिते च। अव्यञ्जिते द्वाभ्यां ज्ञानाभ्या सिध्यति। त्रिभिश्चतुर्भिरिति। व्यञ्जिते द्वाभ्यां मतिश्रुताभ्याम्। त्रिभिर्मतिश्रुतावधिभिर्मतिश्रुतमनःपर्यायैर्वा। चतुर्भिर्मतिश्रुतावधिमनःपर्यायैरिति॥

अवगाहना। क' कस्या शरीरावगाहनाया वर्तमानः सिध्यति। अवगाहना द्विविधा उत्कृष्टा जघन्या च। उत्कृष्टा पञ्चधनुःशतानि धनुःपृथक्त्वेनाभ्यधिकानि। जघन्या सप्तरत्नयोऽङ्गुलपृथक्त्वे हीना'। एतासु शरीरावगाहनासु सिध्यति। पूर्वभावप्रज्ञापनीयस्य प्रत्युत्पन्नभावप्रज्ञापनीयस्य तु एतास्वेव यथास्व त्रिभागहीनासु सिध्यति॥

अन्तरम्। सिध्यमानानां किमन्तरम्। अनन्तर च सिध्यन्ति

---

१ स्वयमेव बुद्धो नान्येन बोधित।

२ प्रत्येकमेकमात्मान प्रति केनचिन्निमित्तेन सजातिस्मरणाद्वल्कलचीरिप्रभृतय करकण्ड्वादयश्च प्रत्येकबुद्धा।

३ बुद्धेन ज्ञातसिद्धान्तेन विदितसस्कारस्वभावेन बोधितो बुद्धबोधित परबोधित।

४ स्वस्मै इष्ट हित तत्करणशील स्वेष्टकारी न परस्मै उपदिशति किंचित्॥ एते चत्वारोऽपि विकल्पद्वयमनुप्रविशन्ति।

५ तृतीयार्थे प्रत्युत्पन्नभावप्रज्ञापनीयेनेत्यर्थ।

६ आत्मन शरीरेऽवगाहोऽनुप्रवेश। सकोचविकासधर्मत्वादात्मन।

७ उत्कृष्ट देहमान मरुदेवीप्रभृतीनाम्।

८ द्विप्रभृत्यानवभ्य पृथक्त्वसज्ञा।

९ सिद्धगमनशून्यकाल अन्तर, अन्तरालमित्यर्थ।

सान्तर च सिध्यन्ति । तत्रानन्तर जघन्येन द्वौ समयौ उत्कृष्टेनाष्टौ समयान् । सान्तर जघन्येनैक समय उत्कृष्टेन षण्मासा इति ॥

सङ्ख्या । कत्येकसमये सिध्यन्ति । जघन्येनैक उत्कृष्टेनाष्टशतम् ॥ १०८ ॥

अल्पबहुत्वम् । एषा क्षेत्रादीनामेकादशानामनुयोगद्वाराणामल्पबहुत्व वाच्यम् । तद्यथा ।

क्षेत्रसिद्धाना जन्मतः सहरणतश्च कर्मभूमिसिद्धाश्चाकर्मभूमि सिद्धाश्च सर्वस्तोका' सहरणसिद्धा जन्मतोऽसङ्ख्येयगुणा । सहरण द्विविधम् परकृत स्वयकृत च । परकृत देवकर्मणा चारणविद्याधरैश्च । स्वयकृतं चारणविद्याधराणामेव । एषा च क्षेत्राणा विभाग' कर्मभूमिरकर्मभूमि समुद्रा द्वीपा ऊर्ध्वमधस्तिर्यगिति लोकत्रयम् । तत्र सर्वस्तोका ऊर्ध्वलोकसिद्धा अधोलोकसिद्धा सङ्ख्येयगुणा' तिर्यग्लोकासिद्धा सङ्ख्येयगुणा' सर्वस्तोका समुद्रसिद्धा' द्वीपसिद्धा. सङ्ख्येयगुणा. । एव तावदव्यञ्जिते व्यञ्जितेऽपि सर्वस्तोका लवण सिद्धा कालोदासिद्धा सङ्ख्येयगुणा जम्बूद्वीपसिद्धा' सङ्ख्येयगुणा धातकीखण्डसिद्धा. सङ्ख्येयगुणा पुष्करार्धसिद्धा. सङ्ख्येयगुणा इति ॥

काल इति त्रिविधो विभागो भवति। अवसर्पिणी उत्सर्पिणी अनवसर्पिण्युत्सर्पिणीति । अत्र सिद्धाना ( व्यञ्जिताना ) व्यञ्जिताव्यञ्जितविशेषयुक्तोऽल्पबहुत्वानुगम कर्तव्य । पूर्वभावप्रज्ञापनीयस्य सर्वस्तोका उत्सर्पिणीसिद्धा अवसर्पिणीसिद्धा विशेषाधिका अनवसर्पिण्युत्सर्पिणीसिद्धा' सङ्ख्येयगुणा इति। प्रत्युत्पन्नभावप्रज्ञापनीयस्याकाले सिध्यति । नास्त्यल्पबहुत्वम् ।

---

१ व्यवच्छेद कदाचिदेकस्मिन् समये द्वयोस्त्रिषु चेत्यादि यावत् षण्मासा ।
२ अष्टोत्तरशतम् ।

गति॰। प्रत्युत्पन्नभावप्रज्ञापनीयस्य सिद्धिगतौ सिध्यति। नास्त्यल्पबहुत्वम्। पूर्वभावप्रज्ञापनीयस्यानन्तरपश्चात्कृतिकस्य मनुष्यगतौ सिध्यति। नास्त्यल्पबहुत्वम्। परम्परपश्चात्कृतिकस्यानन्तरा गतिश्चिन्त्यते। तद्यथा। सर्वस्तोकास्तिर्यग्योन्यनन्तरगतिसिद्धा मनुष्येभ्योऽनन्तरगतिसिद्धाः सङ्ख्येयगुणा नारकेभ्योऽनन्तरगत सिद्धा॰ सङ्ख्येयगुणा देवेभ्योऽनन्तरगतिसिद्धा॰ सङ्ख्येयगुणा इति।

लिङ्गम्। प्रत्युत्पन्नभावप्रज्ञापनीयस्य व्यपगतवेद॰ सिध्यति। नास्त्यल्पबहुत्वम्। पूर्वभावप्रज्ञापनीयस्य सर्वस्तोका नपुंसकलिङ्गसिद्धाः स्त्रीलिङ्गसिद्धा॰ सङ्ख्येयगुणा॰ पुल्लिङ्गसिद्धा॰ सङ्ख्येयगुणा इति॥

तीर्थम्। सर्वस्तोकाः तीर्थकरसिद्धाः तीर्थकरतीर्थे नोतीर्थकरसिद्धाः सङ्ख्येयगुणा इति। तीर्थकरतीर्थसिद्धा नपुंसकाः सङ्ख्येयगुणा॰। तीर्थकरतीर्थसिद्धा॰ स्त्रियः सङ्ख्येयगुणाः। तीर्थकरतीर्थसिद्धाः पुमांसः सङ्ख्येयगुणा इति॥

चारित्रम्। अत्रापि नयौ द्वौ प्रत्युत्पन्नभावप्रज्ञापनीयश्च पूर्वभावप्रज्ञापनीयश्च। प्रत्युत्पन्नभावप्रज्ञापनीयस्य नोचारित्री नोअचारित्री सिध्यति। नास्त्यल्पबहुत्वम्। पूर्वभावप्रज्ञापनीयस्य व्यञ्जिते चाव्यञ्जिते च। अव्यञ्जिते सर्वस्तोका॰ पञ्चचारित्रसिद्धाश्चतुश्चारित्रसिद्धा॰ सङ्ख्येयगुणास्त्रिचारित्रसिद्धाः सङ्ख्येयगुणा॰। व्यञ्जिते सर्वस्तोका॰ सामायिकच्छेदोपस्थाप्यपरिहारविशुद्धिसूक्ष्मसम्पराययथाख्यातचारित्रसिद्धाः छेदोपस्थाप्यपरिहारविशुद्धिसूक्ष्मसम्पराययथाख्यातचारित्रसिद्धाः सङ्ख्येयगुणा सामायिकच्छेदोपस्थाप्यसूक्ष्मसम्पराययथाख्यातचारित्रसिद्धा सङ्ख्येयगुणा सामायिकपरिहारविशुद्धि-

१ अतीर्थकरा सन्त सिद्धा। तीर्थङ्करसिद्धेभ्य सङ्ख्येयगुणास्तेन नपुंसकाद योऽपि सर्वे सङ्ख्येयगुणा।

सूक्ष्मसम्परायथाख्यातसिद्धाः सङ्ख्येयगुणाः सामायिकसूक्ष्मसम्परायथाख्यातचारित्रसिद्धा. सङ्ख्येयगुणा छेदोपस्थाप्यसूक्ष्मसम्परायथाख्यातचारित्रसिद्धा. सङ्ख्येयगुणा. ।

प्रत्येकबुद्धबोधित । सर्वस्तोका प्रत्येकबुद्धसिद्धाः । बुद्धबोधितसिद्धा नपुंसका सङ्ख्येयगुणा । बुद्धबोधितसिद्धा. स्त्रिय. सङ्ख्येयगुणा । बुद्धबोधितासिद्धा पुमास सङ्ख्येयगुणा इति ।

ज्ञानम् । क. केन ज्ञानेन युक्त' सिध्यति । प्रत्युत्पन्नभावप्रज्ञापनीयस्य सर्व. केवली सिध्यति । नास्त्यल्पबहुत्वम् । पूर्वभावप्रज्ञापनीयस्य सर्वस्तोका द्विज्ञानसिद्धा चतुर्ज्ञानसिद्धा. सङ्ख्येयगुणा' त्रिज्ञानसिद्धाः सङ्ख्येयगुणा । एव तावदव्यञ्जिते व्यञ्जितेऽपि सर्वस्तोका मतिश्रुतज्ञानसिद्धा मतिश्रुतावधिमन'पर्यायज्ञानसिद्धा' सङ्ख्येयगुणाः मतिश्रुतावधिज्ञानसिद्धा' सङ्ख्येयगुणा ॥

अवगाहना । सर्वस्तोका जघन्यावगाहनासिद्धा उत्कृष्टावगाहनासिद्धास्ततोऽसङ्ख्येयगुणाः यवमध्यसिद्धा असङ्ख्येयगुणा यवमध्योपरिसिद्धा असङ्ख्येयगुणा. यवमध्याधस्तात्सिद्धा विशेषाधिका सर्वे विशेषाधिका ॥

अन्तरम् । सर्वस्तोका अष्टसमयान्तरसिद्धाः सप्तसमयान्तरसिद्धाः षट्समयानन्तरसिद्धा इत्येव यावद् द्विसमयान्तरसिद्धा इति सङ्ख्येयगुणा । एव तावदन्तरेषु सान्तरेष्वपि सर्वस्तोका । षण्मासान्तरसिद्धा एकसमयान्तरसिद्धाः सङ्ख्येयगुणा यवमध्यान्तरसिद्धा सङ्ख्येयगुणा अधस्ताद्यवमध्यान्तरसिद्धा असङ्ख्येयगुणा उपरियवमध्यान्तरसिद्धा विशेषाधिकाः सर्वे विशेषाधिका ॥

सङ्ख्या । सर्वस्तोका अष्टोत्तरशतसिद्धा विपरीतक्रमात्सप्तोत्तरशतसिद्धादयो यावत्पञ्चाशत् इत्यनन्तगुणा । एकोनपञ्चाशदादयो यावत्पञ्चविंशतिरित्यसङ्ख्येयगुणा । चतुर्विंशत्यादयो यावदेक इति सङ्ख्येयगुणा' । विपरीतहानिर्यथा । सर्वस्तोका अनन्त

गुणहानिसिद्धा असङ्ख्येयगुणहानिसिद्धा अनन्तगुणा' सङ्ख्येयगुणहानिसिद्धा सङ्ख्येयगुणा इति ॥

एवं निसर्गाधिगमयोरन्यतरजं तत्त्वार्थश्रद्धानात्मकं शङ्काद्यतिचारवियुक्तं प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणं विशुद्धं सम्यग्दर्शनमवाप्य सम्यग्दर्शनोपलम्भाद्विशुद्धं च ज्ञानमधिगम्य निक्षेपप्रमाणनयनिर्देशसत्सङ्ख्यादिभिरभ्युपायैर्जीवादीनां तत्त्वानां पारिणामिकौदयिकौपशमिकक्षायोपशमिकक्षायिकाणां भावानां स्वतत्त्वं विदित्वादिमत्पारिणामिकौदयिकानां च भावानामुत्पत्तिस्थित्यन्यतानुग्रहप्रलयतत्त्वज्ञो विरक्तो निस्तृष्णस्त्रिगुप्तः पञ्चसमितो दशलक्षणधर्मानुष्ठानात्फलदर्शनाच्च निर्वाणप्राप्तियतनयाभिवर्धितश्रद्धासंवेगो भावनाभिर्भावितात्मानुप्रेक्षाभिः स्थिरीकृतात्मानभिष्वङ्गः संवृतत्वान्निरास्रवत्वाद्विरक्तत्वान्निस्तृष्णत्वाच्च व्यपगताभिनवकर्मोपचयः परीषहजयाद्बाह्याभ्यन्तरतपोनुष्ठानादनुभावतश्च सम्यग्दृष्टिविरतादीनां च जिनपर्यन्तानां परिणामाध्यवसायविशुद्धिस्थानान्तराणामसङ्ख्येयगुणोत्कर्षप्राप्त्या पूर्वोपचितकर्म निर्जरयन् सामायिकादीनां च सूक्ष्मसम्परायान्तानां संयमविशुद्धिस्थानानामुत्तरोत्तरोपलम्भात्पुलाकादीनां च निर्ग्रन्थानां संयमानुपालनविशुद्धिस्थानविशेषाणामुत्तरोत्तरप्रतिपत्त्या घटमानोऽत्यन्तप्रहीणार्तरौद्रध्यानो धर्मध्यानविजयादवाप्तसमाधिबलः शुक्लध्यानयोश्च पृथक्त्वैकत्ववितर्कयोरन्यतरस्मिन्वर्तमानो नानाविधानृद्धिविशेषान्प्राप्नोति । तद्यथा ।

आमर्शौषधित्वं[1] विप्रुडौषधित्वं[2] सर्वौषधित्वं[3] शापानुग्रहसामर्थ्यजननीमभिव्याहारसिद्धिमीशित्वं वशित्वमवधिज्ञानं शारीरविक

१ स्वहस्तपादाद्यवयवस्पर्शमात्रेणैव सर्वरोगापनयनसामर्थ्यमामर्शौषधित्वम् ।

२ तदीय मूत्रपुरीषावयवसंपर्काच्छरीरनैरुज्यं विप्रुडौषधित्वम् ।

३ सर्व एव तदीयावयवा रोगापनोदौषधी भवन्तीति सर्वौषधित्वम् ।

रणाद्यप्राप्तितामणिमानं लघिमानं महिमानमणुत्वम् । अणिमा बिसच्छिद्रमपि प्रविश्यासीत । लघुत्वं नाम लघिमा वायोरपि लघुतरः स्यात् । महत्त्वं महिमा मेरोरपि महत्तरं शरीरं विकुर्वीत । प्राप्तिर्भूमिष्ठोऽङ्गुल्यग्रेण मेरुशिखरभास्करादीनपि स्पृशेत् । प्राकाम्यमप्सु भूमाविव गच्छेत् भूमावप्स्विव निमज्जेदुन्मज्जेच्च । जङ्घाचारणत्वं येनाग्निशिखाधूमनीहारावश्यायमेघवारिधारामर्कटतन्तुज्योतिष्करश्मिवायूनामन्यतममप्युपादाय वियति गच्छेत् । वियद्गतिचारणत्वं येन वियति भूमाविव गच्छेत् शकुनिवच्च प्रडीनावडीनगमनानि कुर्यात् । अप्रतिघातित्वं पर्वतमध्येन वियतीव गच्छेत् । अन्तर्धानमदृश्यो भवेत् । कामरूपित्वं नानाश्रयानेकरूपधारणं युगपदपि कुर्यात् । तेजोनिसर्गसामर्थ्यमित्येतदादि ॥ इतीन्द्रियेषु मतिज्ञानविशुद्धिविशेषाद्दूरात्स्पर्शनास्वादनघ्राणदर्शनश्रवणानि विषयाणां कुर्यात् । संभिन्नज्ञानत्वं युगपदनेकविषयपरिज्ञानमित्येतदादि ॥ मानसं कोष्ठबुद्धित्वं बीजबुद्धित्वं पदप्रकरणोद्देशाध्यायप्राभृतवस्तुपूर्वाङ्गानुसारित्वमृजुमतित्वं विपुलमतित्वं परचित्तज्ञानमभिलषितार्थप्राप्तिमनिष्टानवाप्तीत्येतदादि । वाचिकं क्षीरास्रवित्वं मध्वास्रवित्वं वादित्वं सर्वरुतज्ञत्वं सर्वसत्त्वावबोधनमित्येतदादि । तथा विद्याधरत्वमाशीविषत्वं भिन्नाभिन्नाक्षरचतुर्दशपूर्वधरत्वमिति ॥

---

१ प्रतीन्द्रियास्तियगादिगानविशेषा ।

२ यत्किंचित्सद्वाक्यादि गृहीत तत सदाचनश्यतीति कोष्ठप्राप्तधान्यवत् ।

३ स्वल्पमपि दर्शितं वस्तु अनेकप्रकारेण गमयति । यथोप्तं बीजं विपुलधान्यरूपेण ।

४ शृण्वतस्तदीयं वचनं क्षीरमिव स्वदते ।

५ मधुवत् स्वदते ।

६ निश्शेषमप्यपराजितत्वम् ।

७ महाविद्याः सर्वा एव तदा तस्य स्वयमेवोपतिष्ठन्ते ।

८ क्रमजातिभेदादनेकप्रकारम् ।

९ भिन्नाक्षराणि किंचिन्न्यूनाक्षराणि चतुर्दश पूर्वाणि सम्पूर्णानि वा तद्धारित्वम् ।

ततोऽस्य निस्तृष्णत्वात्तेष्वनभिष्वक्तस्य मोहक्षपकपरिणामावस्थस्याष्टाविंशतिविधं मोहनीयं निरवशेषतः प्रहीयते। ततश्छद्मस्थवीतरागत्वं प्राप्तस्यान्तर्मुहूर्तेन ज्ञानावरणदर्शनावरणान्तरायाणि युगपदशेषतः प्रहीयन्ते। ततः संसारबीजबन्धननिर्मुक्तः फलबन्धनमोक्षापेक्षो यथाख्यातसंयतो जिनः केवली सर्वज्ञः सर्वदर्शी शुद्धो बुद्धः कृतकृत्यः स्नातको भवति। ततो वेदनीयनामगोत्रायुष्कक्षयात्फलबन्धननिर्मुक्तो निर्दग्धपूर्वोपात्तेन्धनो निरुपादान इवाग्निः पूर्वोपात्तभववियोगाद्धेत्वभावाच्चोत्तरस्याप्रादुर्भावाच्छान्तः संसारसुखमतीत्यात्यन्तिकमैकान्तिकं निरुपमं निरतिशयं नित्यं निर्वाणसुखमवाप्नोतीति॥

एवं तत्त्वपरिज्ञानाद्विरक्तस्यात्मनो भृशम्।
निरास्रवत्वाच्छिन्नायां नवायां कर्मसन्ततौ॥ १॥
पूर्वार्जितं क्षपयतो यथोक्तैः क्षयहेतुभिः।
संसारबीजं कार्त्स्न्येन मोहनीयं प्रहीयते॥ २॥
ततोऽन्तरायज्ञानघ्नदर्शनघ्नान्यनन्तरम्।
प्रहीयन्तेऽस्य युगपत् त्रीणि कर्माण्यशेषतः॥ ३॥
गर्भसूच्यां विनष्टायां यथा तालो विनश्यति।
तथा कर्मक्षयं याति मोहनीये क्षयं गते॥ ४॥
ततः क्षीणचतुष्कर्मा प्राप्तोऽथाख्यातसंयमम्।
बीजबन्धननिर्मुक्तः स्नातकः परमेश्वरः॥ ५॥
शेषकर्मफलापेक्षः शुद्धो बुद्धो निरामयः।
सर्वज्ञः सर्वदर्शी च जिनो भवति केवली॥ ६॥
कृत्स्नकर्मक्षयादूर्ध्वं निर्वाणमधिगच्छति।
यथा दग्धेन्धनो वह्निर्निरुपादानसन्ततिः॥ ७॥

---

१ एनमेवार्थं सङ्क्षेपेणोपदर्शति श्लोकैः।

२ मस्तकसूच्यां ध्वस्तायां यथात्मना विनाशमुपयाति सकलस्तालतरुः। एवं मोहनीये क्षीणे सर्वं शेषकर्म क्षयमेति।

दग्धे बीजे यथात्यन्त प्रादुर्भवति नाङ्कुर ।
कर्मबीजे तथा दग्धे नारोहति भवाङ्कुर ॥ ८ ॥
तदनन्तरमेवोर्ध्वमालोकान्तात्स गच्छति ।
पूर्वप्रयोगासङ्गत्वबन्धच्छेदोर्ध्वगौरवै ॥ ९ ॥
कुलालचक्रे दोलायामिषौ चापि यथेष्यते ।
पूर्वप्रयोगात्कर्मेह तथा सिद्धगति. स्मृता ॥ १० ॥
मृल्लेपसङ्गनिर्मोक्षाद्यथा दृष्टाप्स्वलाबुन ।
कर्मसङ्गविनिर्मोक्षात्तथा सिद्धगति स्मृता ॥ ११ ॥
एरण्डयन्त्रपेडासु बन्धच्छेदाद्यथा गतिः ।
कर्मबन्धनविच्छेदात्सिद्धस्यापि तथेष्यते ॥ १२ ॥
ऊर्ध्वगौरवधर्माणो जीवा इति जिनोत्तमः ।
अधोगौरवधर्माणः पुद्गला इति चोदितम् ॥ १३ ॥
यथाधस्तिर्यगूर्ध्वं च लोष्टवाय्वग्निवीतय ।
स्वभावतः प्रवर्तन्ते तथोर्ध्वं गतिरात्मनाम् ॥ १४ ॥
अतस्तु गतिवैकृत्यमेषां यदुपलभ्यते ।
कर्मण॰ प्रतिघाताच्च प्रयोगाच्च तदिष्यते ॥ १५ ॥
अधस्तिर्यगथोर्ध्वं च जीवानां कर्मजा गति॰ ।
ऊर्ध्वमेव तु तद्धर्मा भवति क्षीणकर्मणाम् ॥ १६ ॥
द्रव्यस्य कर्मणो यद्वदुत्पत्त्यारम्भवीतय. ।
सम तथैव सिद्धस्य गतिमोक्षभवक्षया ॥ १७ ॥
उत्पत्तिश्च विनाशश्च प्रकाशतमसोरिह ।
युगपद्भवतो यद्वत् तथा निर्वाणकर्मणो ॥ १८ ॥
तन्वी मनोज्ञा सुरभि पुण्या परमभास्वरा ।
प्राग्भारा नाम वसुधा लोकमूर्ध्नि व्यवस्थिता ॥ १९ ॥

---

१ वीतय —गतय ।

नृलोकतुल्यविष्कम्भा सितच्छत्रनिभा शुभा ।
ऊर्ध्वं तस्याः क्षितेः सिद्धा लोकान्ते समवस्थिताः ॥ २० ॥
तादात्म्यादुपयुक्तास्ते केवलज्ञानदर्शनैः ।
सम्यक्त्वसिद्धतावस्थाहेत्वभावाच्च निष्क्रियाः ॥ २१ ॥
ततोऽप्यूर्ध्वं गतिस्तेषां कस्मान्नास्तीति चेन्मतिः ।
धर्मास्तिकायस्याभावात्स हि हेतुर्गतेः परः ॥ २२ ॥
संसारविषयातीतं मुक्तानामव्ययं सुखम् ।
अव्याबाधमिति प्रोक्तं परमं परमर्षिभिः ॥ २३ ॥
स्यादेतदशरीरस्य जन्तोर्नष्टाष्टकर्मणः ।
कथं भवति मुक्तस्य सुखमित्यत्र मे शृणु ॥ २४ ॥
लोके चतुर्ष्विहार्थेषु सुखशब्दः प्रयुज्यते ।
विषये वेदनाभावे विपाके मोक्ष एव च ॥ २५ ॥
सुखो वह्निः सुखो वायुर्विषयेष्विह कथ्यते ।
दुःखाभावे च पुरुषः सुखितोऽस्मीति मन्यते ॥ २६ ॥
पुण्यकर्मविपाकाच्च सुखमिष्टेन्द्रियार्थजम् ।
कर्मक्लेशविमोक्षाच्च मोक्षे सुखमनुत्तमम् ॥ २७ ॥
सुखप्रसुप्तवत्केचिदिच्छन्ति परिनिर्वृतिम् ।
तदयुक्तं क्रियावत्त्वात्सुखानुशयतस्तथा ॥ २८ ॥
श्रमक्लमपदव्याधिमदनेभ्यश्च सम्भवात् ।
मोहोत्पत्तेर्विपाकाच्च दर्शनघ्नस्य कर्मणः ॥ २९ ॥
लोके तत्सदृशो ह्यर्थः कृत्स्नेऽप्यन्यो न विद्यते ।
उपमीयेत तद्येन तस्मान्निरुपमं सुखम् ॥ ३० ॥
लिङ्गप्रसिद्धेः प्रामाण्यादनुमानोपमानयोः ।
अत्यन्तं चाप्रसिद्धं तद्यत्तेनानुपमं स्मृतम् ॥ ३१ ॥
प्रत्यक्षं तद्भगवतामर्हतां तैश्च भाषितम् ।
गृह्यतेऽस्तीत्यतः प्राज्ञैर्न छद्मस्थपरीक्षया ॥ ३२ ॥

यस्त्विदानीं सम्यग्दर्शनज्ञानचरणसम्पन्नो भिक्षुर्मोक्षाय घटमानः कालसंहननायुर्दोषादल्पशक्तिः कर्मणां चातिगुरुत्वादकृतार्थ

१ छद्म—कथं तत्प्रत्यक्षादिभिः परीक्ष्यमाणं न क्वचिदुपलभ्यते ।

एवोपरमति स सौधर्मादीनां सर्वार्थसिद्धान्तानां कल्पविमानविशेषाणामन्यतमे देवतयोपपद्यते । तत्र सुकृतकर्मफलमनुभूय स्थितिक्षयात्प्रच्युतो देशजातिकुलशीलविद्याविनयविभवविषयविस्तरविभूतियुक्तेषु मनुष्येषु प्रत्यायातिमवाप्य पुनः सम्यग्दर्शनादिविशुद्धबोधिमवाप्नोति । अनेन सुखपरम्परायुक्तेन कुशलाभ्यासानुबन्धक्रमेण परं त्रिर्जनित्वा सिध्यतीति ॥

वाचकमुख्यस्य शिवश्रियः प्रकाशयशसः प्रशिष्येण ।
शिष्येण घोषनन्दिक्षमणस्यैकादशाङ्गविदः ॥ १ ॥
वाचनया च महावाचकक्षमणमुण्डपादशिष्यस्य ।
शिष्येण वाचकाचार्यमूलनाम्नः प्रथितकीर्तेः ॥ २ ॥
न्यग्रोधिकाप्रसूतेन विहरता पुरवरे कुसुमनाम्नि ।
कौभीषणिना स्वातितनयेन वात्सीसुतेनार्घ्यम् ॥ ३ ॥
अर्हद्वचनं सम्यग्गुरुक्रमेणागतं समुपधार्य ।
दुःखार्त्तं च दुरागमविहतमतिं लोकमवलोक्य ॥ ४ ॥
इदमुच्चैर्नागरवाचकेन सत्त्वानुकम्पया दृब्धम् ।
तत्त्वार्थाधिगमाख्यं स्पष्टमुमास्वातिना शास्त्रम् ॥ ५ ॥
यस्तत्त्वाधिगमाख्यं ज्ञास्यति च करिष्यते च तत्रोक्तम् ।
सोऽव्याबाधसुखाख्यं प्राप्स्यत्यचिरेण परमार्थम् ॥ ६ ॥

---

१ प्रत्यायातिं-प्रत्यागमनम् ।

२ मनुष्यो देवः पुनर्मनुष्य इति त्रीणि जन्मानि समवाप्य सम्यक्त्वज्ञानलाभात् आहितसंवरस्तपसा क्षपितकर्मराशिः सिध्यति सिद्धिक्षेत्रे ।

३ स्वशास्त्रावाचकम् ।

इति तत्त्वार्थाधिगमेऽर्हत्प्रवचनसङ्ग्रहे दशमोऽध्यायः समाप्तः ।

समाप्तश्चायं ग्रन्थः ॥

# शुद्धिपत्रकम्



| अशुद्धम् | शुद्धम् | पृ | प |
|---|---|---|---|
| नाकमणो | नामकर्मणो | २ | १८ |
| जग्धादिशापकातु | जग्धादिशापकासु | ३ | २४ |
| सघाता | मघाता | ६ | २३ |
| विरा | विपाका | | २४ |
| लो | तौं | ७ | १ |
| अन्यामत् | अन्यतमम् | ९ | ५ |
| य वे इ | य | ९ | ६ |
| पेक्षयार्जाव | पक्षया जीव | १० | २३ |
| ग्रहण | ग्रहणे | ११ | १४ |
| द्रव्यात्मक | द्रयात्मक | १२ | १५ |
| पञ्चस्तिकाय | पञ्चास्तिकाय | १४ | १३ |
| अ | अर्ध — | १५ | १५ |
| तद्गत | तद्द्वैत | १७ | २१ |
| भित्यर्थ | भित्यर्थ । | १९ | १५ |
| स्व | श्वेद | १९ | २६ |
| चैक सामयिक | चकसामयिक | २० | ११ |
| गृण्णाति | वगृह्णाति | २० | २८ |
| चिर | चिरे | २१ | ५ |
| तथाश्रय | तथाश्रय० | २१ | ११ |
| मङ्गनाद्य | मङ्गलाद्य | २३ | ३ |
| प्रकर्षणनामादि | प्रकर्षणनामादि | २३ | ७ |
| पुष्प | पुष्प | २३ | १८ |
| प्राविष्टम् | प्रविष्टम् । | २३ | २२ |
| विशेषा | वशेषा | ३० | २० |
| त्याति | न्याति | ३१ | ८ |
| स | म | ३२ | १९ |
| स्वय परि | स्वयपरि | ३९ | १६ |
| च | सम्यक्त्वचारित्रे च | ४० | ७ |
| लभला वि | लाभ वि | ४ | ९ |
| माया | मायालोभ | ४१ | १३ |
| पारिणामिक | पारिणामिका | ४२ | ८ |
| चाष्टा | चाष्टादश | ४२ ४३ | ७,१९ |
| सिद्धातु | सिद्धवतु | ४७ | २० |
| वको | वका | ४८ | १७ |
| विगतो | विगता | ४८ | २९ |
| मद्गत्ता | मद्गता | ५१ | ९ |
| तजम | तजम | ५१ | १९ |
| चाल | शाल | ५६ | २५ |
| कृष्ण | कृष्णाद्य | ६० | १५ |
| दश | दह | ६० | २९ |
| शरादा | शरीरा | ६५ | २१ |
| मुपयन्ते | त्पयन्ते | ७१ | १ |
| मवि- कारणा | म- करणा | ७७ | ७ |
| कर | कार | | ११ |
| य मुरु | यमक | ७७ | १९ |
| मध्ये | मध्ये | ७९ | १६ |
| एनन्धा | एनद्धा | ८१ | १७ |
| पल्योमा | पल्योपमा | ८१ | १ |
| म्रय | यत्र | ८२ | ७ |
| जन्मलब्धा | जन्म लब्धा | ८२ | १८ |
| नामा | नाम | ८३ | ११ |
| आनि | अनौ | ८५ | १३ |
| मुन | सान | ८६ | १७ |
| भाव | भा | ८७ | १३ |
| दा | रूपा | ८९ | १२ |
| वर्जिट- | वर्जि- | ८९ | २१ |
| ऋद्धाप | ऋषि | ९० | १४ |
| द्वात्रिंश | द्वात्रिंश | ९२ | २४ |
| सूर्या | न द्रा | ९३ | २४ |
| सवन | सावन | ९४ | १२ |
| चान्द्रा | चान्द्री | ९४ | २३ |
| वर्ति | वर्ति | ५ | १० |
| दयाथा | दयार्था | ९६ | १० |
| सानत्कु | सनत्कु | ९५-९७ | |

| अशुद्धम् | शुद्धम् | पृ | प | अशुद्धम् | शुद्धम् | पृ |
|---|---|---|---|---|---|---|
| कृष्णराजर्षीर्मन्य | कृष्णरा शोर्मण्य | १०१ | २१ | चिबुवक | चिबुक | १५९ |
| शवन | शयन | १०६ | १८ | इय | इध | १६० |
| तस्मारक | तस्मात्क | १०८ | ११ | राय वीर्या | राय वीर्या | १६१ |
| पूरा | पूर | १०८ | १५ | ज्ञान | ज्ञाना | १६१ |
| स्नमेपा | स्वमेषां | १ ८ | २३ | ऽ्याय | ऽ्याय | १६७ |
| वाट | वाट् | १११ | १० | धर्मे | धम | १६८ |
| धम पर | धर्मो पर | ११२ | ८ | वाह्या | बाह्या | १६८ |
| पुद्नला | पुद्गला | ११३ | १३ | महारि | दारि | १६८ |
| कुम्भा | कम्भा | ११५ | १६ | अट | नट | १६९–१७५ } है |
| १ २ | | | | | | |
| अणव स्कन्धा | अणव स्कन्धा | ११६ | ६ | द्रुण | द्रुण | १७२ |
| रानित्य | रनित्य | ११६ | २३ | काधा | क्राधा | १७४ |
| ध्रोव्य | ध्राव्य | ११७ | ११ | मया | ेया | १७५ |
| उत्पादद | उत्पाद | ११७ | १४ | उपध्याय | उपाध्याय | १७८ |
| व य | बन्ध | १२२ | ८ | तितर्कै | वितर्कै | १८१ |
| चमन्ते | चक्षते | १२३ | १६ | च | क्षीणकषायस्य च | १८१ |
| प्रतेनव्या | प्रत्येतव्या | १२७ | १ | ध | ध्ट | १८३ |
| पुरु | परु | १२७ | ९ | साध्या | माध्या | १८४ |
| शरिर | शरीर | १३० | १९ | योग | योग | १८४ |
| मयान | मया न | १३२ | १७ | येपान | येषां न | १८४ |
| भयो समा | भयो समा | १३५ | १९ | प्रयम | प्रथम | १८६ |
| सम्लनां | सलेखना | १४३ | १५ | मुहूत | मुहूर्त | १८८ |
| विच्छेद | छविच्छेद | १४५ | ९ | ऽप्रफला | ऽप्र फला | १९० |
| सचित्त | सचित्ता | १४८ | २० | पुद्नला | पुद्गला | १९१,१ |
| तप सप | तप सप | १४९ | १६ | बहू | बहु | १९१ |
| स्वन भज | स्वतोऽप्र | १५० | २० | सिद्धा | सिद्धा | १९३ |
| दर्शीक | दर्लिक | १५२ | २० | स्यय | स्वय | १९५ |
| सम्यकत्व | सम्यक्त्व | १५४ | १० | गुण | गुणा | १९७ |
| परात्य | परत्य | १५४ | १४ | वियद्गति | वियद्गति | १९९ |
| तद्दार | तद्द्वार | १५४ | १५ | श्रृण्वत | शृण्वन | १९९ |
| प्रयागे | प्रयोग | १५५ | २१ | सपूणाणि | सपूर्णानि | १९९ |